योगः कर्मसु कौशलम्

AHNIK VARTA PATRAM

Email - ahnikvartapatram@gmail.com

# आह्निक वार्ता पत्रम्

RNI No. : UPSAN/2018/76680

वर्ष-3 अंक 269 संस्कृत दैनिक/ प्रात; संस्करण | प्रयागराज 24 जुलाई 2021 शनिवार | पृष्ठ-4 | मूल्य- 2 रुपये

### सुभाषितम्

**यावद्वित्तो पार्जन सक्तः**
**तावन्निजपरिवारो रक्तः।**
**पश्चाज्जीवति जर्जरदेहे वार्तां**
**कोऽपि न पृच्छति गेहे ।**

**भावार्थ :**

**जब तक व्यक्ति धनोपार्जन में समर्थ है, तब तक परिवार में सभी उसके प्रति स्नेह प्रदर्शित करते हैं परन्तु अशक्त हो जाने पर उसे सामान्य बातचीत में भी नहीं पूछा जाता है ।**

### संक्षिप्तवार्ताः

चयनित शिक्षकानाम् नियुक्ति पत्राणि प्रदत्तानि, स्थानीये मोतीलाल नेहरू प्रौद्योगिकी संस्थाने अभवत्कार्यक्रमः।

### डिआरडिओ संस्थया सम्पुष्टीकृतस्य स्वदेशीयस्य वेध अग्निसायकस्य प्रयोगपरीक्षणं विजयप्रदम् अभवत्।

**नवदेहली।** भारतीय प्रतिरोध मन्त्रालयस्य स्वाधीने वर्तमानस्य रक्षा अनुसन्धानम् एवं विकास सङ्गठनस्य (डिआरडिओ) स्वदेशीयरूपेण सम्पुष्टीकृतस्य वेध -मार्ग दर्शकाग्नि सायकस्य प्रयोग परीक्षणं विजयप्रदम् अभवत्। एतत् भारतीय सैन्यस्य आत्मविश्वासं संवर्धयितुं सहायकमभवत् इति संस्थया आवेदितम्। स्वयं लक्ष्यप्रापण-प्रौद्योगिक विद्या, तथा मितभारत्वम् इत्यादि विशेषतायुक्तम् अग्निसायकमेव विक्षिप्तम् इति संस्थाम् उद्धृत्य ए एन् ऐ वार्तासंघेन आवेदितम्। वेध अग्निसायकम् अयथार्थ मध्ये सूक्ष्मतया पातयित्वा तत् विनाशयत् इति संस्थया प्रोक्तम्।

**मेरठ क्रीड़ा विश्व विद्यालयस्य निमार्णाय मन्त्रि परिषद् द्वारा प्राप्ता अनुमतिः**

# पश्चिमोत्तर प्रदेशः भविष्यति क्रीड़ायाः सर्वतोवृहद् केन्द्रम्

**प्रतिभायाः प्रतिशोधनेन सह क्रीडायाः व्यावहारिकशिक्षायां दापयिस्यति उपाधयः**

**विश्वविद्यालयस्य निर्माण कार्यस्य काले प्रदेशस्य कर्मिभ्यः प्राप्स्यते वृत्तिः**

**सप्तशत कोटिनां रुप्यकाणां मूल्येन 23.747हेक्टेयर मितायां भूमेः कारयिष्यते निर्माणम्**





**लखनऊ/मेरठ।** विश्वस्य मञ्चे उत्तरप्रदेशस्य क्रीडकानां प्रतिभां उन्नयता योगिसर्वकारेण पश्चिमोत्तरप्रदेशं क्रीडायाः केन्द्रं निर्मातुं निणर्यः गृहीतः। एतन्निमित्तं तेन सिद्धता आरब्धा । तेन मेरठे अधुना पर्यन्तं सवीवृहद् क्रीडा विश्वविद्यालयस्य निर्माणं कार्यते। मन्त्रिपरिषदा अपि मेरठक्रीडाविश्वविद्यालयाय स्वीकृतिः प्राप्ता। अधुना अस्य निर्माणकार्यं तीव्रतया आरब्धुं शक्ष्य-ते। नूतन क्रीडा मञ्चस्य निर्माणानन्तरं पश्चिमोत्तरप्रदेशस्य ग्राम–ग्रामाणां प्रतिभावद्भ्यः युवभ्यः क्रीडायाः अवसरः प्राप्स्यते । ते स्वकीयां क्रीडां सम्यक् करणेन सह अन्येषु प्रदेशेषु पलायनं न करिष्यन्ति । सर्वकारेण एतादृशेभ्यः क्रीडकेभ्यः स्वस्मिन् एव प्रदेशे समुचिताक्रीडाव्यवस्था प्रापयितुं व्यवस्था क्रियते । उत्तरप्रदेशस्य दायित्वं यदारभ्य मुख्यमन्त्रिणा योगिना आदित्यनाथेन स्वीकृतं तदारभ्य अद्य पर्यन्तं प्रदेशे क्रीडकेभ्यः सुविधासु निरन्तरं वर्धनं भूयते। क्रीडकेभ्यः क्रीडायाःअवसराः मिलन्ति अपि च तेभ्यः क्रीडायां विशिष्टताधारे विभिन्नसर्वकारिविभागेषु वृत्तिः अपि प्राप्ता।

### मेरठे सप्तशतकोटिरुप्यकाणां मूल्येन सिद्धः भविष्यति नूतन क्रीडा विश्वविद्यालयः

मेरठे सप्तशतकोटिरुप्यकाणां मूल्येन नूतनक्रीडाविश्वविद्यालयस्य निर्माणं भविष्यति । पश्चिमोत्तरप्रदेशे वृहद्सङ्ख्यायां क्रीडकाः निर्गमिष्यन्ति । प्रायेण त्रिदशकम् आरभ्य सञ्चाल्यमानः अनुरोधः अधुना अत्रत्यः जनेभ्यः पूर्यमानः दृश्यते । मेरठे क्रीडाविश्वविद्यालयं निर्मातुं सरधनाक्षेत्रम् अतिरिच्य कैलीग्रामस्य भूमिः चिह्निता। 23.74हेक्टेयरमितायां भूमेः नूतनक्रीडाविश्वविद्यालयः निर्मीय सिद्धः भविष्यति । यस्मिन् क्रीडकेभ्यः सम्यक् प्रशिक्षणं उपलप्स्यते । क्रीडाविश्वविद्यालये शारिरिकशिक्षा, स्वास्थ्यानुप्रयुक्तक्रीडाविज्ञानं, क्रीडाप्रबन्धनं प्रौद्योगिकीक्रीडानुशिक्षणं च, क्रीडापत्रकारिता सञ्चारमीडियाप्रौद्योगिकी च, साहसिकक्रीडा युवाप्रसङ्ग चेत्यादिनः उपलप्स्यन्ते । एतेषु विषयेषु क्रीडकः इतः स्नातकं, परास्नातकं, डिप्लोमा, सर्टिफिकेट, एम0 फिल0 तथा पी0एच0डी0 पर्यन्तं उपाधयः स्वीकर्तुं शक्ष्यति ।

### पश्चिमोत्तरप्रदेशस्य क्रीडकानां प्रकाशयिष्यते प्रतिभा

मेरठे क्रीडा विश्वविद्यालयस्य निर्माणेन अस्य लाभः पश्चिमोत्तरप्रदेशस्य प्रतिभा शालिभ्यः क्रीडकेभ्यः प्राप्स्यते । मेरठे सरधनायां क्रीडाविश्वविद्यालयस्य निर्माणेन पश्चिमोत्तरप्रदेशस्य युवभ्यह स्वकीया क्रीडाप्रतिभा प्रकाशने बहु सहायता प्राप्स्यते । क्रीडाविश्वविद्यालयस्य स्थापनया असङ्गठितक्षेत्राणां कर्मिभ्यः वृत्तिः प्राप्स्यते अपि च क्रीडकानां अनुशिक्षणस्य भविष्ये वृत्त्यावसरस्य द्वाराणि उद्घटिष्यन्ते ।

### क्रीडकान् क्रीडायां विशेषज्ञान् करिष्यति क्रीडा विश्वविद्यालयः

उत्तरप्रदेशराज्यक्रीडाविश्वविद्यालयस्य स्थापनया प्रदेशे क्रीडा संस्कृतिश्च वर्धयिष्यते । अधुना क्रीडाविश्वविद्यालयेषु शारीरिकयोग्यतायां, कौशले, क्रीडासु च कीर्तिमानं स्थापयितुम् अपि च पदकं विजेतुं क्रीडकेभ्यः क्रीडायाः व्यावहारिकाधारिता शिक्षा प्रदास्यते । येन क्रीडकः राष्ट्रिय–अन्ता राष्ट्रियस्तरे आयोजिते प्रतियोगितासु अधिकानि पदकानि आनेतुं शक्ष्यन्ति।

## प्रतिष्ठानपुरस्थे क्रियायोग आश्रमे वैदिकरीत्या गुरूपूर्णिमा महोत्सवः अद्य

**महोत्सवः 17 जुलाईतः 27 जुलाई पर्यन्तं आयोजितः**



गुरू पूर्णिमायाः शुभमुहूर्तं समारभत्। अनेकानां आयोजनानां समारम्भः, शनिवासरे अपि कार्यक्रमाः सम्पाद्याः सन्ति।



**प्रयागराजः। वार्ताहरः।** प्रतिष्ठानपुरस्थे क्रियायोग आश्रमे वैदिकरीत्या गुरूपूर्णिमा महोत्सवः अद्य। झूंसीस्थिते क्रियायोग आश्रमे च अनुसंधान संस्थाने अद्य वैदिकरीति विधिना गुरूपूर्णिमा महोत्सवः प्रचलितः। अयं महोत्सवः 17 जुलाईतः 27 जुलाई पर्यन्तं आयोजितो भविष्यति। अस्मिन् अवसरे भारतस्य विविधेभ्यः प्रान्तेभ्यः अन्येभ्यः राष्ट्रेभ्यः यथा यूएसए, कनाडा, यूरोप, ब्राजील, सिंगापुर, दक्षिणअपफ्रीका, नेपाल, प्रभृतिभ्यः राष्ट्रेभ्यः जनाः समागतवन्तः। गुरूपूर्णिमा महोत्सवस्य पूर्व सन्ध्यायां समागतवान् देश विदेशानाम् साधकान् स्वामीश्री योगीसत्यम् अब्रवीत् यत् सद्भावना-सद्विचारः -सद्धारणयागुरोः सेवाकरणे गुरूः शिष्ययोः दूरत्वं समाप्यते।

### ॥ गुरुमहिमा ॥



**डा. शिवानी शर्मा,**
**जयन्तीपुरम्,**
**( जीन्दनगरम् )**
**हरियाणाराज्यम्**

भवति भुवि गुरुर्वै ज्ञानसृष्टेर्विधाता
विविधकुलकलाभिः पोषको यो वटूनाम् ।
हरति स शिवरूपेणैव चाज्ञानजातं
त्रिभुवनपतिरूपः शोभते सद्गुरुर्हि ।।1।।
वहति घनजलौघं तद्गुरोर्ज्ञानमेतत्
परिहरति स शिष्याणां गुरुस्सर्वदोषान् ।
विरलसरलरीत्या बोधयन् सर्वजीवान्
जयतु गुरुयशस्ते सर्वलोकेषु हृद्यम् ।।2।।
उपदिशति सदा यश्शब्दधर्मान्गुरुर्हि
गिरति निगदतीदं विश्वमेतद् गुरुः सः ।
जननमरणवेत्ता त्वात्मवेत्ता गुरुर्हि
जयतु गुरुयशस्ते सर्वलोकेषु हृद्यम् ।।3।।
सुरनरमुनिपूज्यस्सर्वलोके गुरुस्स
सकलगुणवरिष्ठस्सर्वविद्योपदेष्टा।
सकलशकलमध्ये ज्ञापयन्भेदमेतं
जयतु गुरुयशस्ते सर्वलोकेषु हृद्यम् ।।4।।
प्रथमशिशुगुरुर्या कथ्यते मातृरूपा
उपनयनविधाता यो गुरुः स द्वितीयः।
पठति विविधविद्यास्सद्गुरोर्बालकोऽयं
जयतु गुरुयशस्ते सर्वलोकेषु हृद्यम्।।5।।
परमकरुणदेवो देवतानां गुरुर्यः
परमरसिकदेवो वासुदेवो गुरुर्हि ।
परमनिपुणदैत्यानां गुरुः शुक्रवर्यः
जयतु गुरुयशस्ते सर्वलोकेषु हृद्यम् ।।6।।
प्रभवति ननु सत्यं वेदवाणीगुरोर्हि
भवति तदिह लोके यः प्रकाशस्य दीपः ।
सुदृढसुमतियोगैर्योजयन् भक्तवर्यान्
जयतु गुरुयशस्ते सर्वलोकेषु हृद्यम् ।।7।।

## संस्कृत भाषा समुत्थानाय माननीय योगिसर्वकारेण महद्घोषणा कृता



**लखनऊ।** अधुना प्रदेशे मानदेयानुसारमेव संस्कृत शिक्षकाणां बहुसंख्यायां नियुक्ति र्भविष्यति। संस्कृत विद्यालयेषु शिक्षकाणां रिक्तस्थानस्याभावं दूरीकर्तुं योगिसरकारि महत्त्वपूर्णनिर्णयं कृतम्। पूर्व मध्यमाकक्षायां शिक्षणस्य कृते शिक्षकेभ्यः द्वादशशत रूप्यकाणि प्रतिमाह प्रदानं करिष्यति।

उत्तर मध्यमाकक्षायां शिक्षण कार्यहेतवे शिक्षेभ्यः पञ्चदशशतरूप्यकाणि प्रदानं करिष्यते शैक्षिकसत्रम् 2021-22 एवं 2022-23 ग्रीष्मावकाश कालस्यातिरिक्तं संस्कृत पाठनाय संस्कृत शिक्षकानां नियुक्तिर्भविष्यति। अशासकीय सहायता प्राप्तेषु संस्कृत माध्यमिक विद्यालयेषु एवं राजकीय संस्कृत विद्यालयानुसारंमानदेयवेतने शिक्षकाणां नियुक्तिर्भविष्यति। संस्कृत भाषायामेव भविष्यति परम्परागत विषयानुसारं शिक्षकाणामभ्यर्थिनां साक्षात्कारः संस्कृत पठन-पाठनस्य सुचारु व्यवस्थायाः कृते योगिसर्वकारः कटिबद्धो जातः।

## सम्पादकीयम्

# सनातन परम्परायां गुरोः सर्वोपरि

गुरु पूजनेन लोक कल्याणस्य सम्भावना बलीयसीभारतीय सनातन परम्परायां गुरोः सर्वोपरि स्थानम्। गुरोराज्ञा गरीयसी इति मदीया मान्यता। गुरुः साक्षात् परब्रह्म इव प्रतिष्ठितः भवति अस्मद्देशे। गुरुपूर्णिमा पर्वणि श्रद्धालुभिः स्व-स्व गुरुणां पूजनं अर्चनं क्रियते। तेषां प्रति श्रद्धास्पदं भाव अभिव्यंज्य सादरं यथाशक्ति दक्षिणा द्रव्याणि वस्त्राणि, फलानि बहू वस्तूनि समपर्णस्य महती परम्परा। अस्य मानव जीवने सानुकूलः प्रभावः दरीदृश्यते। गुरुपूर्णिमायाः अपरं नाम व्यासपूर्णिमा अपि ख्यातः। अस्मिन् दिवसे जनाः व्यासस्यापि पूजनं अर्चनं कुर्वन्ति। अयं व्यासस्य प्रादुर्भावदिवसरूपेण लोके प्रथितः। गुरु पूजनेन लोक कल्याणस्य सम्भावनाबलीयसी भवति।

# तनुपतिस्तनुतुर्यगतेन चेन्मुत्थसिलं विदधाति तथांगपः

स्त्रिया अथवा पुरुषेन स्वजनसमुदायं परित्यज्य अन्यस्थाने प्रस्थानं क्रियते, किञ्चित् कालं यावत् तयोः सङ्केतः न लभ्यते, पत्रमपि नागच्छेत् तर्हि गृहजनाः अतीव दुःखिता भवेयुः। तदा चिन्तामग्नाः ते ज्योतिषसमीपं गत्वा तेषां नाम पलायितजनानां क्षेमवार्तां पृच्छन्ति। एवंरूपप्रश्नः आगमनप्रश्नः इत्युच्यते। एतस्मिन् विषये पण्डितरुद्रमणिः प्रश्नशिरोमणिग्रन्थे एवमकथयत् -
तनुपतिस्तनुतुर्यगतेन चेन्मुत्थसिलं विदधाति तथांगपः।
कुरिलकेन्द्रेगतस्तनुमीक्षते स सुखमेति तदा पथिको ध्रुवम्।1
अर्थात् लग्नेशः यदि लग्नस्य अथवा चतुर्थग्रहेण सह इत्थसालं करोति अथवा वक्रीलग्नेशः केन्द्रे स्थित्वा लग्नं पश्यति तर्हि पथिकः सुखपूर्वकरूपेण आगच्छेत्। अस्मिन् श्लोके केन्द्रस्थानम् अतिमुख्यमिति मन्यन्ते। अस्य विवरणम् आचार्यवराहमिहिरः एवमवदत् - लग्नात् च्युतिः, चतुर्थभावात् बुद्धिः दशमभावात् प्रवास एवं सप्तमभावात् निवृत्तेः विचारः करणीयः। प्रश्नसमये एतेषु भावेषु स्थितग्रहाणामनुसारेण समस्त शुभाशुभफलं वक्तव्यम्। चतुर्थभावे शुभग्रहस्थिते प्रवासी स्वगृहम् आगतवानिति वक्तव्यम् - च्युतिर्लग्नाज्ज्ञेया हिबुकगृहतो वृद्धिरुदिताप्रवासः स्यान्मध्याद्भवति विनिवृत्तिः स्मरगृहात्।
गृहैरेतत्प्रश्नोदयसमयगैवच्यिमखिलं प्रविष्टः
स्वं गेहं हिबुकगृहगे प्रोषितपुमान्। अस्मिन् श्लोके लग्नभावात् च्युतेः विचारः कथितः। अर्थात् अधिकार-त्याग-पदहानि-स्थानान्तरण-वर्षागमन एवं बन्धविमोचनम् इत्यादयः प्रश्नच्युतेः मूलकानि भवन्ति। चतुर्थस्थाने बुद्धेः विचारः उक्तोऽस्ति। अर्थात् पदवृद्धिः-अधिकारवृद्धिः-धनवृद्धिः-यशोवृद्धिः एवं न्यायस्थानम् अथवा मित्रं वा दम्पतिलाभाः इत्यादयः वृद्धिमूलकप्रश्नाः भवन्ति। दशमभावात् प्रवासविचारः करणीयः अर्थात् यात्रा, विदेशगमन, यात्रायां सुख.दुःख एवं लाभ-हानि इत्यादयः प्रश्नाः प्रवासमूलकाः भवन्ति। सप्तमभावात् निवृत्तेः विचारः करणीयः। अर्थात् यात्रातः पुनरागमनं, रोगान्मुक्तिः, मृत्यु-कष्टनिवृत्तिः तथा तस्करित अपगतवस्तुप्रापणम् इत्यादयः प्रश्नाः निवृत्ति-मूलकाः भवन्ति। एवंरूपेण तस्य ग्रन्थस्य व्याख्याकारः ''डॉ. शुकदेवचतुर्वेदी'' कथयति - तनुधनसहजस्थाः सर्वखेटा यदि स्युस्तदुपथिक उपैति स्युर्यदा तत्र सौम्याः। हृतगतनरवस्त्वाप्तिर्यदा जीवशुक्रौ द्रुततरमुपयात्येव स्वदेशे हि पान्थः। अर्थात् लग्नात् द्वितीये, तृतीयभावेषु सर्वग्रहाः स्थिताः चेत् पथिकाः आगमिष्यन्ति। यद्युक्तभावेषु केवलं शुभग्रह एव भवेत्तर्हि नष्टवस्तुनः प्राप्तिः तथा अपगतवस्तुनः आगमनं भवेत्। यदि केवलं बृहस्पतिशुक्रौ एव पूर्वोक्तभावेषु स्थितौ तर्हि पथिकोऽतिशीघ्रं स्वगृहं प्राप्स्यतीति वक्तव्यम्। परन्तु अस्मिन् श्लोके लग्नात् द्वितीये, तृतीयभावेषु प्रवासीजनागमनाय सर्वेषां ग्रहाणां स्थितिः अनिवार्या नास्तीति अस्माकं विचारः भवति। परन्तु अस्माभिः ज्ञायते यत् लग्नात् द्वितीये, तृतीयभावेषु त्रिचतुर्ग्रहाः स्थिता चेदपि प्रवासस्य आगमनसूचना लभत्येव। यदि सर्वग्रहाणां स्थित्यर्थमङ्गीक्रियते तर्हि श्लोकस्य शेषभागः विरुद्धार्थक एव भवेत्। पण्डित रुद्रमणिः स्पष्टयति यत् लग्नस्य द्वितीये, तृतीयभावेषु केवल बृहस्पति शुक्रस्थितिरेव यात्राकरणजनान् गृहे स्थापयति नाम नैवगमयतीत्यर्थः। एतेषु स्थानेषु शुभग्रह स्थितश्चेत् नष्टवस्तुनः प्राप्तिः तथा पलायितस्य आगमनं सम्भाव्यते। बादरायणः कथयति यत् लग्नात् द्वितीय-तृतीयभावेषु ग्रहस्थितश्चेदपि यात्री पुनरागमनशीलो भवेत्। केचन ग्रहाः सन्त्यपि शीघ्रगमनमेव सम्भाव्यते। लग्नाद् द्वितीयभवनं तृतीयं वा ग्रहेण संयुक्तम्। दूरगतस्यागमनं प्रवृत्तिमथवा विनिर्दिशति। बादरायणमतानुसारेण लग्नात् द्वितीयतृतीयभावेषु स्थितः ग्रहः अर्थात् पाप अथवा शुभग्रहश्चेत् प्रवासजनागमनसूचना दीयते। वराहमिहिरमतानुसारेण एवं भवति - लग्नतः सहजपुत्रवित्तगा दूरगागमनशंसितो ग्रहाः। नष्टलम्भनकराः शुभग्रहाः शीघ्रमागमकरौ तु मन्त्रिणौ। लग्नात् तृतीये, पञ्चमे एवं द्वितीयस्थानेषु ग्रहस्थिते तर्हि प्रवासीजनागमनमभिलक्ष्यते। एतेषु स्थानेषु स्थित शुभग्रहः नष्टप्रदार्थस्य लाभं करोति तथैव शुक्रश्चेत् शीघ्रागमनं भवेत्। अस्य श्लोकस्य व्याख्याकरणसमये ''डॉ. शुकदेवचतुर्वेदीमहाभागः'' कथयति यत् - एतेषु स्थानेषु शुभग्रहभवेत्तर्हि गृहात् पलायिताः, अदृश्यजाताः जीवाः गृहं शीघ्रमागमिष्यन्ति। निर्जीवपदार्थाः अस्मिन् योगे नैव लभ्यन्ते एव। तेषां सर्वानुसारेण एतेषु योगेषु कुटुम्बस्य, भ्रातुः, बन्धु एवं सन्तानस्य प्रीतिकारणेन व्यक्तिः स्वदेशानयनप्रभावशालीं भूमिकां पोषयति। आर्यासप्ततिग्रन्थे एवं कथितम् - दुश्चिक्यधनसमेतौ गुरुशुक्रावागमं न्नृणाम्। बन्धूपगतावेतौ गृहप्रवेशं क्षणात्कुरुतः। प्रश्नलग्नात् तृतीये तथा द्वितीयभावेषु गुरुशुक्रौ भवेताम् तदा परदेशीजनागमनं सम्पद्यते। यदि गुरुशुक्रौ चतुर्थभावे स्थितौ तर्हि परदेशीजनाः अतिशीघ्रमेव गृहं प्राप्स्यन्तीति वक्तव्यम्। पण्डित रुद्रमणिः लग्नात् द्वितीयतृतीयभावविषये कथयति। परन्तु अन्याचार्याः द्वितीय-तृतीयभावविषये वदन्नपि लग्नं ते नैव अङ्गीक्रियन्ते। केचन द्वितीयतृतीयाभ्यां सह पञ्चमभावमपि अस्मिन् योगे स्वीकुर्वन्ति। परन्तु दैवज्ञजीवनाथस्य मतं तु अन्यथा वर्तते - जीवो वा भार्गवो वाऽपि चन्द्रो वा सुखवेश्मनि।
पथिकं गृहमायान्तं जानीयात् प्रश्नवित्तदा। चतुर्थभावे स्थितः सौम्यग्रहः शीघ्रमेव प्रवासीजनागमनसूचनां ददाति। गमनसम्बन्धप्रश्ने अस्य फलं विपरीतं भवेत्। अर्थात् यात्रीजनस्य अन्यत्रप्रस्थानं नैव सम्भवेत्। किन्तु प्रश्नसिन्धुकारस्य मतमेवं वर्तते - लग्नस्य पार्श्वोपतौ विधोर्वा स्मरस्य वा सौम्यखगौ खगौ वा। एकत्र योगेऽपि गतौ न वेति प्रस्थातुकामो न खलु प्रयाति। लग्नात् चन्द्रः सप्तमभावादद्वितीये तथैव द्वादशस्थाने द्वौ शुभग्रहौ स्थितौ तावपि नान्यग्रहैः युक्तौ चेत् यात्राकामुको जनः यात्रा नैव कर्तुं समर्थो भवेत्। यदि पूर्वोक्तस्थाने गुरुः तथा शुक्रः स्थितस्तर्हि प्रवासी शीघ्रमेवगृहमागमिष्यति। उक्तस्थानेषु अन्यग्रहस्थितश्चेत् प्रवासी दूरदेशं गमिष्यति। परन्तु प्रश्नमार्गग्रन्थे विरुद्धरूपेण उक्तमस्ति यथा -
आरूढे चरभे चतुर्थमृतिगाः सोम्यागृहस्यागमं
कुर्वन्त्यर्थसहोत्थगा अपि पुनः प्रस्थाय मार्गागतम्।
कर्मेशो विनिवर्तयेन्नवमगो वक्री ततः प्रोषितं मार्गस्थं तमुदीरयेत् द्विष उपेत्यावस्थिते लग्नये। अर्थ (द्वितीयभाव), सहोत्थ (तृतीयभाव ) एतयोः यदि शुभग्रहश्चेत् प्रोषितव्यक्तिः मध्ये मार्गे आगत्य पुनर्गच्छतीति वक्तव्यम् भवति। कश्चिद्ग्रहः सप्तमगोऽरिगो वा केन्द्रे गुरुश्चागमनं करोति। त्रिकोणगो ज्ञो यदि वा भृगुः स्यात्पांथागमश्चेद्धिमगुर्मृतिस्थः। यदि कोऽपि ग्रहः सप्तमे वा षष्ठभावे स्थितः, केन्द्रे बृहस्पतिस्थितस्तर्हि पान्थो आगच्छेत्। त्रिकोणे बुधः अथवा शुक्रश्चेदपि अदृश्यव्यक्तिः पुनरागच्छेत्। अत्र पण्डितरुद्रमणिः कथयति यत् लग्नात् षष्ठ-सप्तमभावयोः कोऽपि एक अथवा द्वौ ग्रहौ अर्थात् उभयभावं सग्रहञ्चेत् अथवा एक एव भावः सङ्ग्रहश्चेत् केन्द्रे गुरुश्चेत् प्रोषितागमनं सम्भाव्येत। एवं प्रकारेण त्रिकोणे बुधशुक्रौ आगमनकारकौ भवतः। सामान्यतया केन्द्रत्रिकोणे शुभग्रहस्थिते 3,6,11 स्थानेषु पापग्रहः शुभफलस्य सूचना ददाति। परन्तु त्रिकोणे एकाकीबुधो वा शुक्रोऽपि निवृत्तिकारको एव। पण्डित रुद्रमणिः अस्मिन् लघुश्लोके एव अत्यधिकयोगान् उक्तवानासीत्।

(1) लग्नगतगुरुः, षष्ठगतः अन्यग्रहः, लग्नगतगुरुः, सप्तमगत ग्रहः, चतुर्थगतगुरुः वा षष्ठसप्तमस्थानयोः ग्रहः एते मिलित्वा चत्वारयोगान् कुर्वन्ति।

(2) एवं प्रकारेण सप्तमगतगुरुः अथवा षष्ठसप्तमस्थयोः अन्यग्रहस्य द्वौ योगौ, दशमभावगतगुरोः द्वौ योगौ आहत्य अष्टयोगाः भवन्ति।

(3) एवं प्रकारेण पञ्चमे वा नवमे बुधस्तथैव, षष्ठे, सप्तमे भावेषु अन्यग्रहचेत् योगद्वयं सम्भाव्यते।

(4) पञ्चमे नवमे वा शुक्रः, षष्ठे सप्तमे अन्यग्रहाः चेत् योगद्वयं सम्पद्यते। एवम् आहत्य योगचतुष्टयं निर्माति। एवमेव पञ्चमे बुधः, षष्ठे ग्रहः, पञ्चमे बुधः, सप्तमे ग्रह इत्यादि प्रकारेण योगाणां अधिकभेदोऽपि जायते। परन्तु वयं त्रिकोणगतबुधो वा षष्ठसप्तमगतग्रहेण सह द्वौ द्वौ योगौ अङ्गीकुर्म एव। यदि केन्द्रे गुरुः, त्रिकोणे बुध अथवा शुक्रस्यापि श्लोके सम्बन्धमुररीकृत्य अर्थज्ञानेनापि भेदोपजायते।

# केन्द्रीयमाध्यमिकशिक्षाबोर्ड अस्य स्थापना कतिपय-परस्पर- सम्बन्धितामुद्देश्याणां पूर्तये जाताः

1 दशमीद्वादशी कक्षायाः अन्ते सार्वजनिकी परीक्षामा योजितुमेवं परीक्षा सम्बन्धिताः नियमाः निर्धारणार्थम्। सम्बद्धविद्यालयानां सफल विद्यार्थिभ्योऽर्हता- प्रमाण- पत्रं प्रदातुम्।

2 तेषां विद्यार्थिनां शैक्षिकावश्यकतानां पूर्तये, येषां पितरौ स्थानान्तरणीयपदेषु कार्यरताः भवेयुः।

3 परीक्षायै अनुदेशपाठ्यक्रमाणां निर्धारणाय तथा च एतान्पाठ्यक्रमानद्यतनर्त्तुम्।

4 परीक्षाप्रयोजनाय विद्यालयसम्बद्धतां प्रदातुं, देशस्य शैक्षिकप्रतिमानान् वर्धयितुञ्च।

4 तथा च एतान्पाठ्यक्रमानद्यतनर्त्तुम्।

सीबीएसई इति (Central Board Of Secondary Education), केंद्रीय-माध्यमिक-शिक्षा-बोर्ड इत्यस्येकं संक्षिप्तनामास्ति। इत्यस्य पूर्णनाम 'केंद्रीय-माध्यमिक-शिक्षा-बोर्ड' इत्यस्ति । इयमस्माकं देशस्य प्रप्रमुखशिक्षाबोर्ड वर्तते। सीबीएसई इत्यस्यान्तर्गते आगच्छन्तः सर्वे विद्यालयानां सञ्चालनं केन्द्रसर्वकारेण क्रीयते। अस्यस्थापना 1962तमे वर्षे नवम्बरमासस्य तृतीये दिनाङ्के (03 नवम्बर 1962) जाता।

**इतिहासः-** भारते प्रथमं उत्तर प्रदेश बोर्ड ऑफ हाई स्कूल एण्ड इंटरमीडिएट एजुकेशनश् प्रथमबोर्ड इत्यस्य स्थापना 1921तमे ईस्वीयेवर्षे जाता। राजपुतानाए मध्यभारतए ग्वालियर चेत्यस्याधिकारक्षेत्रे आयान्ति स्मः। अपि च संयुक्तप्रान्तानां सर्वकारेण द्वाराकृताभ्यावेदनस्यूत्तरे तत्कालीनभारतसर्वकारेण सर्वेभ्यः क्षेत्रेभ्यः 1929तमेवर्षे एकं संयुक्तबोर्ड इत्यस्य स्थापनायाः प्रस्तावं प्रदत्तं यस्य नाम ष्बोर्ड्ऑफ् हाईस्कूल् एण्डइंटरमीडिएट् एजुकेशन् राजपूतानाष् इति स्वीकृतम्। क्षेत्रेऽस्मिन् अजमेर्ए मारवाड़ए मध्यभारतः ग्वालियर च सम्मिलिताः आसन्।
बोर्डद्वारा माध्यमिकशिक्षास्तरे तीव्रविकासविस्तारकरणस्य फलस्वरूपं अस्य संस्थानेषु शिक्षास्तरे गुणताञ्च परिष्कारः आगतः। परं देशस्य विभिन्नभागेषु राज्यविश्वविद्यालयाः राज्यबोर्ड इत्यनयोः स्थापनेन केवलम् अजमेरभोपाल.तत्पश्चात्? विंयप्रदेशमेवास्याधिकारक्षेत्रेऽवशिष्टः आसन्। परिणामस्वरूपतः 1952तमेवर्षे बोर्ड इत्यस्य संविधानं संशोधितं जातम् येनास्य क्षेत्राधिकारः भाग.गए भाग.घ इत्यस्य क्षेत्रतः वर्धितः जातः। अपि च बोर्ड एतमस्य वर्तमाननाम केन्द्रीय.माध्यमिक.शिक्षा.बोर्ड इति कृतम्। अन्ततः 1962तमेवर्षे बोर्ड इत्यस्य पुनर्गठनं जातम्। अस्य प्रमुखोद्देश्यः वर्तते। तेषां शैक्षिकसंस्थानानामधिकप्रभावीरूपेण सेवाकरणंए तेषां छात्राणां शैक्षिकावश्यकतानां प्रति उत्तरदायी भवितव्यम् येषामभिभावकाः केन्द्रसर्वकारे कार्यरताः सन्ति अपि च येषां प्रायः स्थानान्तरणीयव्यवसायाः आसन्।

अस्यान्तर्गतेरागतः सर्वे निजी अथवा पब्लिक् विद्यालयाःए राजधानीदेहलीतः संचालिताः भवन्ति। सीबीएसई विद्यालयेषु शिक्षायाः द्वौ माध्यमौ स्तःए हिन्दीमाङ्गं वापि चेतेषां पाठ्यक्रमे छब्म्त्ज् इत्यस्य पुस्तकानि प्रयुज्यते। 1921तमेवर्षे भारतस्य प्रप्रथमशिक्षा.बोर्ड इत्यस्य स्थापना उत्तरप्रदेशे जाताए यस्य नामासीत् श्उत्तर.प्रदेश.बोर्ड्.आफ्.हाई.स्कूल.एंड.इंटरमीडिएट.एजूकेशन्श् इति। सीबीएसई इत्यनेन शिक्षायाः क्षेत्रे तीव्रगत्या से विकासः कृतःए अपि चैतदेव कारणमस्ति यत् गतवर्षेषु अस्याः बह-तीव्रतया विस्तारोऽभवत्। 2020तमे वर्षे वर्तमानसमये ष्मनोजः आहूजा महोदयःष् केन्द्रीय.माध्यमिक.शिक्षा.बोर्ड सीबीएसई इत्यस्याध्यक्षोऽस्ति।

सीबीएसई अन्यबोर्ड तः भिन्नो एतदर्थमस्ति यतोह्यस्य पाठ्यक्रमे छब्म्त्ज् इत्यस्य पुस्तकानि प्रयुज्यते। भारते उच्चस्तरीया शिक्षायै बहवाः महत्वपूर्णपरीक्षाणां यथा छम्म्जए श्रम्म् आदिनां पाठ्यक्रमाः सीबीएसई इत्यनेन युक्तः भवति। ये छात्राः क्षेत्रेऽस्मिन् स्वीयभविष्यं यच्छन्ति तेभ्यः सीबीएसई पाठ्यक्रमः बहूपयोगी सिद्धः ।
केन्द्रीय.माध्यमिक.शिक्षा.बोर्ड्;ब्मदजतंस ठवंतक व िमबवदकंतल म्कनबंजपवद अथवा ब्ठैम्द्ध भारतस्य विद्यालयस्तरीय.शिक्षायाः एको प्रमुखो बोर्ड्अस्ति। भारतस्यान्तर्बहिर्वा बहवः निजी.विद्यालयाः एतेन सम्बद्धाः सन्ति। अस्यप्रमुखोद्देश्यो वर्तते दृ शिक्षासंस्थानान्याधिकप्रभावशाली रूपेण लाभः दानीयम्ए तेषां विद्यार्थिनां शैक्षिकावश्यकतानां प्रति उत्तरदायित्वं भवितव्यम्ए येषां मातापितरौ केन्द्रीयसर्वकारस्य कर्मकरौ स्तः।

अपि च निरन्तरन्स्थानान्तरणीयपदेषु कार्यरताः भवेयुः। केन्द्रीयविद्यालयाःए 1761 सर्वकारीयविद्यालया॰ःए 5827 स्वतन्त्रविद्यालयाःए 480 जवाहरनवोदयविद्यालया॰ःए 14 केन्द्रीयतिब्बतीयविद्यालयाः सम्मिलिताः सन्ति। अस्य ध्येयवाक्यं वर्तते दृ श्असतो मा सद्गमयश् ;हे प्रभो! अस्मानसत्यतः सत्यम्प्रत्यग्रसरतु।

**क्षेत्राधिकारः** बोर्ड्इत्यस्याधिकारक्षेत्रं व्यापकं वर्तते अपि च राष्ट्रस्य भौगोलिकसीमातः बहिरपि प्रसरितमस्ति। पुनर्गठनस्य फलस्वरूपं दिल्लीमाध्यमिकशिक्षाबोर्ड इत्यस्य केन्द्रीयबोर्ड मध्ये विलयः कृतः तथा च ऐन प्रकारेण दिल्लीबोर्ड द्वारा मान्यताप्राप्तासर्वाः शैक्षिकसंस्थाः अपि केन्द्रीयबोर्ड इत्यस्याङ्गोऽभूत्। तदनन्तरं संघशासितप्रदेश. चण्डीगढ. अरूणाचलप्रदेश.अण्डमाननिकोबारद्वीपसमूह सिक्किमराज्यस्य पुनश्च झारखण्ड.उत्तरांचल एवं छत्तीसगढ़स्य सर्वे विद्यालयाः अपि बोर्ड इत्यनेन सह सम्बद्धतां प्राप्तवन्तः सन्ति। 1962तमेवर्षे मात्र 309 विद्यालयतः 31.03.2007 तमेवर्षे 8979 विद्यालययावत् बोर्ड इत्यनेन सम्बद्धाः जाताः येषु 21 अन्यदेशेषु प्रचलिताः 141 विद्यालयाः अपि सम्मिलिताः सन्ति। एतेषु आहत्य 897 केन्द्रीयविद्यालयाःए 1761 सर्वकारिकविद्यालयाःए 5827 स्वतन्त्रविद्यालयाःए 480 जवाहरनवोदयविद्यालयाःए 14 केन्द्रीयतिब्बतीविद्यालयाः सम्मिलिताः सन्ति।

**विकेन्द्रीकरणम्** स्वकीयकार्याणि अधिकाधिक प्रभावशाली रूपेण निष्पादितुं सम्बद्ध विद्यालयानाञ्च प्रति अधिकप्रतिसंवेदी उद्देश्येन बोर्डद्वारा देशस्य विभिन्नभागेषु क्षेत्रीय कार्यालयाः स्थापिताः। बोर्ड इत्यस्य क्षेत्रीयकार्यालयाः अजमेर्ए चेन्नईए इलाहाबादए गुवाहाटीए पंचकुलाए देहेल्याञ्च स्थिताः सन्ति। देशात् बहिः स्थितविद्यालयाःए क्षेत्रीयकार्यालयाः देहल्याः अन्तर्गते आयान्ति। मुख्यालयस्यए क्षेत्रीय कार्यालयस्य कार्यकलापेषु दृष्टिः स्थापयति। यद्यपि क्षेत्रीयकार्यालयाः अपि पर्याप्ताधिकारः दीयते तथापि नीतिगतकार्येषु मुख्यालयं प्रेषयते। प्रशासन सम्बन्धिनः दिन प्रतिदिनस्य कार्येषुए विद्यालयेन सम्पर्कःए परीक्षायाः पूर्वं परं वा व्यवस्थादि सर्वेषां कार्याणां निरीक्षणं क्षेत्रीय कार्यालयेन द्वारा क्रीयते।

# एष वन्ध्यासुतो याति खपुष्पकृतशेखरः, कूर्म्मक्षीरचये स्नातः शशशृङ्गधनुर्धरः

वस्तुतस्तुशक्यः अर्थः बौद्धः, अपि च, शक्तं पदं स्फोटस्वरूपं बौद्धम्, तयोः तादात्म्यम् अर्थात् तादात्म्यञ्च तद्भिन्नत्वे सति तदभेदेन प्रतीयमानत्वमिति भेदाभेदसमनियतम् अर्थात् द्वयोः पदार्थयोः वस्तुतः भेदो भवेत्, आरोपितश्च अभेदो भवेत्, तर्हि तयोः पदार्थयोः भासमानो धर्म्मः तादात्म्यमिति उच्यते। अत्र भेदः वास्तविको भवति, अभेदश्च आरोपितो भवति, तस्मात् तयोः वास्तविकस्य आरोपितस्य च सहस्थितौ न दोषः। यदि द्वयं वास्तविकं स्यात्, तर्हि अन्धकारस्य प्रकाशस्य इव सहस्थितिः न स्यात्। नैयायिकानां तादात्म्यम् अभेदरूपं भवति, अस्माकं वैयाकरणानां शब्दार्थतादात्म्यं भेदाभेदरूपं भवति। अयमस्ति उभयोः भेदः। एवञ्च बौद्धार्थस्य शक्यत्वेन, स्फोटात्मकपदस्य शक्तत्वेन स्वीकारे एव वह्निशब्दोच्चारणे सति मुखे न दाहापत्तिः, बौद्धे वह्नयादौ अर्थे दाहादिशक्त्याभावात्। बौद्धार्थे बाह्यार्थदाहादिः न भवतीति प्रतिपाद्यते न्यायदर्शनस्य विकल्पविषयकसूत्रेण - 'शब्दज्ञानानुपाती वस्तुशून्यो विकल्पः' अस्यार्थस्तु शब्दद्वारा उत्पन्नज्ञानात् अनन्तरं बाह्यार्थरहितः अर्थः बुद्ध्या परिकल्पितः अनुपतति बुद्धौ पश्चाद् भवति इति। व्याकरणप्रक्रियार्थमपि बौद्धार्थस्यावश्यकत्वमस्ति - एष वन्ध्यासुतो याति
खपुष्पकृतशेखरः।
कूर्म्मक्षीरचये स्नातः शशशृङ्गधनुर्धरः।।
अत्र बाह्यार्थात् अतिरिक्तस्य बौद्धार्थस्य स्वीकारात् एव बाह्यार्थरूपार्थवत्त्वस्य यत्र वन्ध्यासुत-खपुष्प-कूर्म्मक्षीर-शशशृङ्गशब्देषु अभावसत्त्वेऽपि बौद्धार्थेन अर्थवत्त्वं मत्वा प्रातिपदिकसञ्ज्ञा, तदुत्तरं स्वादिप्रत्ययश्च भवति।
निष्कर्षः - शब्दादागतः शाब्दः, 'तत आगत'17 इत्यनेन अण्। अण्प्रत्ययार्थः प्रयोज्यत्वम्। तथा च शब्दप्रयोज्यो बोधः शाब्दबोधो भवति। सर्वैः शब्दैः निखिलार्थबोधो न जायते। तस्माच्छब्देनार्थबोधाय वृत्तिज्ञानं कारणभूतम्। वृत्तिस्तु ज्ञाता सती शाब्दबोधं प्रति कारणत्वं वहते, न स्वरूपसती। अज्ञातवृत्तिकस्य शाब्दबोधादर्शनात्। वैयाकरणैरत्र पदपदार्थयोर्वृत्त्याख्यसम्बन्धः शक्तिलक्षणाऽन्यतररूपः इति मन्यते। अत्र नैयायिकमते - ईश्वरेच्छा शक्तिः, सा च अस्मात् पदात् अयमर्थो बोद्धव्यः, इदं पदमिममर्थं बोधयतु इत्याकारिका। इच्छायाः सम्बन्धत्वाभावेन शक्तित्वाभावः। 'सम्बन्धो हि सम्बन्धिद्वयभिन्नत्वे सति द्विष्ठत्वे च सति आश्रयतया विशिष्टबुद्धिनियामकः'।18 तथा च यः सम्बन्धिनोः आश्रयतायाः नियामकः, स एव सम्बन्धः कथ्यते। अत्र तु सम्बन्धिनौ पदपदार्थौ, तौ न इच्छायाः आश्रयौ, चेतने आत्मनि एव इच्छायाः आश्रयतासम्भवात्। अत एव घटशब्द इच्छावान्, तदर्थो वा इच्छावान् इति व्यवहारोऽपि न स्यात्। बोधजनकत्वं शक्तिरिति भूषणकाराभिमतं मतम्। किन्तु बोधजनकत्वं शक्तिः अपि सम्बन्धो भवितुं नार्हति, पदे वृत्तितानियामकेन स्वरूपसम्बन्धेन स्थिता अपि पदार्थे तु वृत्तिताऽनियामकेन नियामकतासम्बन्धेन तस्याः स्थितत्वात्। भट्टनागेशमते पदपदार्थयोः सम्बन्धान्तरमेव शक्तिः, तस्याः शक्तेः नाम वाच्यवाचकभावोऽस्ति। अस्याः शक्तेः बोधकः तादात्म्यसम्बन्धः19, तादात्म्यस्य च इतरेतराध्यासो वर्त्तते। पदार्थनिरूपिततादात्म्यवत् पदम्, पदनिरूपिततादात्म्यवान् अर्थः इति व्यवहारे प्रसिद्धत्वात् तादात्म्यस्य द्विष्ठत्वात्20 सम्बन्धत्वमुपपन्नम्। अत्र तादात्म्यस्य निरूपकत्वेन विवक्षितोऽर्थः शक्यः, आश्रयत्वेन च विवक्षितः शब्दः शक्तः इत्युच्यते। वस्तुतो बौद्ध एवार्थः शक्यः, पदमपि स्फोटात्मकं प्रसिद्धम्, तयोस्तादात्म्यम्। इयञ्च शक्तिः त्रिविधा - रूढिशक्तिः, योगशक्तिः, योगरूढिशक्तिश्च। रूढिशक्तिः21 - कल्पितप्रकृतिप्रत्ययार्थबोधकत्वासमानाधिकरणा या किञ्चिदर्थनिरूपिता शक्तिः सा रूढिरित्युच्यते। यथा - मणिनूपुरशब्दौ। योगशक्तिः - अवयवार्थमात्रबोधकपदे शक्तिः योगः। यथा पाचक इत्यादौ। योगरूढिशक्तिः - यत्रावयवशक्तिसमानाधिकरणा च समुदायशक्तिस्तत्र योगरूढिशक्तिः। यथा पङ्कजादिपदे। नानार्थकशब्देषु वाच्यवाचकभावरूपा नाना शक्तिः भवति, सा संयोगविप्रयोगादिभिः शक्तिनियामकैः क्वचित् एकत्र अर्थे निश्चीयते। ते शक्तिनियामकास्तु - संयोगः, विप्रयोगः, साहचर्य्यं, विरोधिता, अर्थः, प्रकरणं, लिङ्गं, अन्यस्य शब्दस्य सन्निधिः, सामर्थ्यम्, औचिती, देशः, कालः, व्यक्तिः, स्वरादयश्च।

# विद्यार्थिसमाजः राष्ट्रस्य एकः शक्तिशाली सङ्घो वर्तते



**नारदोपाध्यायः असम प्रदेशः वैदिकगणः**

सम्प्रति भारते विद्यार्थिनामुपरि यदा वयं विहङ्गमदृष्ट्या पश्यामः तदा सर्वतो निराशा हि हस्तगता भवति। अद्यतना विद्यार्थिनः प्रायः अनुशासनहीनाः, अकर्मण्याः, पाश्चात्यसभ्यतायां सततं निमग्नाः सन्तः स्वराष्ट्रमपि विस्मृतवन्त इव अवलोक्यन्ते। ते स्वराष्ट्रस्य वस्तूनि इतरराष्ट्राणां वस्तूनि इव मन्येरन्। राष्ट्रियसम्पदः ध्वस्तीकर्तुमपि तत्परा भवेयुः। भारतीयसंस्कृतिम् उपहसेयुः। राष्ट्रस्य कर्णधारिविद्वत्समुदायं प्रति व्यङ्गात्मकदृष्ट्या पश्येयुश्च इत्यादि। ते न समाजेन सामञ्जस्यतां रक्षेयुः, न वा परिवारेण च आस्थां स्थापयेयुः । माता-पिता-गुरूणाम् वचने तेषु विश्वासो नावलोक्यते। अध्ययने तेषाम् अरुचि एवं वेशभूषाणां भक्ता जाता दृश्यन्ते । एतत्सर्वम् अवलोक्य समाजस्य आशङ्क भवति यत् भारतीया विद्यार्थिनो यदि एतादृशेन मार्गेण एव चलेयुः तर्हि इयं पवित्रा भूमिः पुनरपि विदेशिनां हस्तगता भविष्यतीति। सम्पूर्णं राष्ट्रम् अवनत्यभिमुखं चलत् अस्माकं प्राचीनवैभवम्, संस्कृतिः, उद्योगः, वाणिज्यम् इत्यादिकं सर्वमपि अचिरेण हि नश्येदिति। अतो राष्ट्रस्य विद्यार्थिभिः सर्वैः सम्भूय ऐक्यमतेन राष्ट्रहितार्थं हि सर्वदा प्रयतनीयञ्चेत् शीघ्रं हि अस्मद्देशः पूर्णतो विकासमुखी, शक्तिमान् च भवितुमर्हिष्यति, कारणं देशोन्नतिः सर्वदा नवयुवकानां विद्यार्थिनामुपरि हि अवलम्बते प्रायः इति।

# अमृतवाणी गीतातत्वार्थ बोधः

**गीता ज्ञानप्रियः सदा सुखी भवति।**



शत्रुघ्नश्रीनिवासाचार्यः ( पंडित शंम्भुनाथ शास्त्री वेदान्ती ) भागलपुर ( बिहार )

**क्रोधाद्भवति सम्मोहः**
**सम्मोहात्स्मृतिविभ्रमः।**
**स्मृतिभ्रंशात्बुद्धिनाशो**
**बुद्धिनाशात्प्रणश्यति॥**
**( गीता/2/63 )**

**हिन्दीपद्यानुवादः-**
क्रोध भये जिनके मनते तिन,मोह पड़े कछु सूझत नाहीं।
स्मृति गयी जब मोह भये तब सोचत ही सब बुद्धि नशाहीं।।
रे मन मूरख क्रोध तजो अब, सोच विचार करो मनमाहीं।
माधव सो नित प्रेम करो, नहि आन उपाय बने जगमाहीं।।

**संस्कृतभाष्यम्** -श्रीमद्भगवद्गीतायाम र्जुनविषादयोगप्रसङ्गे सुक्ष्मतया विचारणीयःविषयः वर्तते यत् कामक्रोधलोभमोहादयः सम्मोहकारकाःमन्यन्ते। यथा कामात् सम्मोहःभवति तस्मात् कामाभिभूतः मनुष्यः विवेकशून्यो भूत्वा कर्त्तव्याकर्त्तव्यनिर्णय्यं कर्तुमसमर्थाः भवन्ति। तथैव क्रोधलोभमोहादिकेभ्यः सम्मोहो विजायते। इन्द्रियजन्यविषयाणां चिन्तनात् रागः ,रागात् काम ,कामात् क्रोधः,क्रोधात् सम्मोहः,सम्मोहात् स्मृतिनाशः स्मृतिनाशात्बुद्धिनाशः बुद्धिनाशात्मान वजीवनस्य पतनं सुनिश्चतम्। अत्र कामक्रोध लोभमोहादयः क्रमशः सर्वे मानवजीवनस्य पतनकारकाः मन्यन्ते।एतदर्थं सर्वथा त्याज्याः।तेषु काम एव एतेषां मूलकारणमस्ति तस्मात् कामः मानवस्य दुजर्यः शत्रुः मन्यते। गीतायाः तृतीयेऽध्यायेऽपि भगवता श्रीकृष्णेनार्जुनं प्रत्युपदिष्टं यत् -'जहि शत्रुं महाबाहो कामरूपं दुरा-सदम्।'अपि च एतदपिचिन्तनीयम् क्रोधःमित्रं यदा यस्य मोहश्शत्रुर्भवेत्तदा।स्मृतिभ्रंशो भवेत्तस्मात् तस्य बुद्धिर्विनश्यति। प्रायः मनुष्याःपूर्वजन्मविषय-वासनाभ्यासात् अनन्तकामनावशीभूताः भवन्ति। इह जन्मन्यपि पूर्वजन्मसंस्कारत्वात् सदा विषयसङ्गः एव तस्योद्देश्यं भवति। तस्मात् कामनापूर्त्यभावात् तस्मिन् सद्यः क्रोधः समुद्भवति। क्रोध एव तस्य मित्रं भवति,स क्रोधाभिभूतः मनुष्यःसम्मोहावस्थायां कर्त्तव्याकर्त्तव्यविचारं विहाय स्वेच्छाचारी भूत्वा जल्पति। सम्मोहात् तस्य स्मृतिभ्रंशः जायते। स्मरण शक्तिनष्टे सति आत्मज्ञान स्वरूपात्मिका बुद्धेः विनाशो भवति। बुद्धिविनाशात् मानवः दुःखसागरे पतति। शाब्दबोधः- कर्त्तव्याकर्त्तव्यविवेकानामभावः।

**अन्वयशब्दार्थः-** क्रोधात् क्रोध उत्पन्न होने से, सम्मोहः्कर्त्तव्य और अकर्त्तव्य कर्म के विवेक का अभाव स्वरूप सम्मोह (अज्ञान),भवतिृ उत्पन्न होता है, सम्मोहात्विवेक का अभाव रूप सम्मोह (अज्ञान), भवतिृउत्पन्न होता है, सम्मोहात्विवेक का अभाव रूप सम्मोह से ,स्मृतिविभ्रमः इन्द्रिय पर विजय पाने के लिए प्रयत्न की स्मृति का नाश,भवतिृहो जाता है, स्मृतिभ्रंशाइन्द्रिय- विजय का विवेक नष्ट होने से, बुद्धिनाशः आत्मज्ञान की प्राप्ति कराने वाली दृढ़ बुद्धि का नाश,(भवतिृहो जाता है ), बुद्धिनाशा बुद्धिनाश के नाश हो जाने से, प्रणश्यतिृ सांसारिक विषयों में निमग्न हो जाते हैं।

**तत्वार्थः-** काम से उत्पन्न क्रोध की अतिशयता से सम्मोह होता है, कर्त्तव्या कर्त्तव्य के विवेक के अभाव से सम्मोह उत्पन्न होता है। विवेकहीन मनुष्य को जो नहीं करना चाहिए उसमें प्रवृत्त हो जाने से उसकी स्मरण शक्ति का क्षरण हो जाता है, जिससे इन्द्रियों पर विजय पाने के लिए प्रारम्भिक प्रयत्न करने वाली स्मृति नष्ट हो जाती है । स्मृति के नष्ट होने से आत्मज्ञान कराने वाली दृढ़ बुद्धि का नाश हो जाता है। बुद्धि के नाश होते ही मनुष्य दुःखमय संसार में डूब जाता है जहाँ से उवार पाना असम्भव होता है । हाँ, किसी विवेकी पुरुष का सङ्ग उसे इस दुःख से उवार सकता है वह भी ईश्वर कृपा साध्य है।

**रहस्यात्मक तथ्य-** (क)क्रोध से सम्मोह की **अवस्था-** क्रोध से उत्पन्न होनेवाले अत्यन्त मूढ़भाव का स्वरूप इतना विकृत हो जाता है कि उस समय मानव के अन्तःकरण में विवेक शक्ति का अत्यन्त अभाव हो जाता है। क्रोध के वशीभूत होकर जिस भी कार्य को करना चाहता है उसके परिणाम का उसको कुछ भी भान नहीं रहता ।यही क्रोध से उत्पन्न सम्मोह की अवस्था होती है । ऐसी स्थिति में वह कर्त्तव्याकर्त्तव्य के निणय्य में अक्षम हो जाता है, तथा आत्मघाती कदम उठाने को उद्धत हो जाता है।

(ख)-सम्मोह से समृति भ्रंश की **अवस्था-** मानव पहले ही काम के अधीन होकर क्रोध स्वरूप में अपने विवेक को इस तरह खो बैठता है कि उसके क्रोध से उसे सम्मोह होने लगता है अर्थात् अच्छे बुरे परिणाम का ज्ञान भी नहीं समझ पाता है।

# ।गीतोपनिषद् ज्ञानामृतं।।



गीताज्ञान संचरण समितिः, पटना, विहार, अध्यक्षः डॉक्टर सुदर्शन श्रीनिवास शाण्डिल्यः



## ।। गुरूत्वमिह श्रेयस्करम् ।।

गुरुपूर्णिमावसरे सर्व जनहिताय सर्वाभ्युदयकारकं ज्ञानं मन्तव्यं। किं गुरूत्वमिति विचारणीयं? सुनिश्चितमिदं ज्ञानं यत् आध्यात्मिकजगति नूनमेव आत्मकल्याणायैव गुरूत्व-शिष्यत्वयोः नित्यस्सम्बन्ध एव गुरूत्वसंचारकः। । आत्मकल्याणातिरिक्तः कश्चिदपि भौतिकलाभाय यत्नः गुरूत्वनाशक एव। भौतिक जीवन संचालनाय गुरुः भवत्येव नहि। यदि चेद् तदा स शिक्षागुरुः, उपाध्यायः,न तु दीक्षा गुरुः। सम्प्रति भौतिक लाभायैव गुरूत्व संचरणं दृश्यत तत्रापिउभयत्र भौतिक लाभ जालः। कदापि नेदं गुरूत्वं। । व्यापार-व्यवसाय संचारोयं। स्वभावानुकूलाय गुरूत्वं स्वीक्रियते। यत्र मदीयः विचारः चलतु, मम महत्वं भवतु, अनेन सम्बन्धेन धनी भविष्यामि, स्वस्थो भविष्यामि,ऋणमुक्तो भविष्यामि, पुत्रादिकं भविष्यति,फार्चूनरयानं भविष्यति,मुम्बय्यां देहल्याञ्च प्रासादादिकं भविष्यतीति विविधासु भौतिककामनासु न कदापि गुरूत्व- शिष्यत्वयोः वासः। शुद्धोऽयं भौतिक व्यापारः। सम्पूर्णा गीता गुरूत्व संचारिका। एकदा अर्जुनेन निर्मलहृदयेन भगवतः शरणागतो भूत्वा कथितम् 'शष्यस्तेऽहं'। मम आत्मकल्याणाय यज्ज्ञानं सुनिश्चितं तदेव ब्रूहि भगवन्। अर्जुनः न भौतिक लाभाय ज्ञानं याचते, केवलम् आत्मकल्याणाय अयमात्मसुभाव एव गुरूत्वसंचारकः।'स्वस्वीकृतानुशासिता शिष्यता' 'स्वयं सिद्धस्फूर्तश्रेयसंचारिका गुरुता'इत्यनयोः यत्र सम्बन्धः तत्रैव वास्तविकं आत्मकल्याणकरं गुरूत्वं। शिष्यतायामेव गुरूत्वावासः। न तत्रोच्चनीचयोर्भेदः। अयन्तु पशुभाव संचारः। ।यथा भणितं पूज्यपादेन स्वामीरामसुखदासेन 'सच्चा गुरु कौन' इति पुस्तके। इत्यस्य नायं भावश्चेत् गुरुः नादरणीयः, कदापि नहि ,निर्मल हृदयः कल्याणकामी परिपक्वः शिष्यस्तु सर्वतो भावेन गुरोरादरं करिष्यत्येव। परं नमनप्रियो न भवेत्, धनमानप्रियो न भवेत्, भौतिक प्रसिद्धि प्रियो न भवेत् ।अन्यथा गुरूत्वं हीयते क्षीयते च। नेदं गुरूत्वमात्मकल्याणकारकं। भगवान् कृष्णः न कदापि सम्पूर्णायां गीतायां प्रतिपदोक्तरूपेण ववाद 'अहं गुरुरस्मि' परं शिष्य श्रेयसे सारथिः भूत्वापि सम्पूर्णतां गीतां जगाद। अहो धन्यं धन्यं धन्यं कृष्णगुरुत्वं। परमगुरवे कृष्णाय नमः।

गुरुपूर्णिमा स्वगुरुत्वजागरण दिवसः
गुरुपूर्णिमा स्वलघुत्वापसारण दिवसः
गुरुपूर्णिमा स्वात्ममूल्यांकन दिवसः।
गुरुपूर्णिमा नित्यानंद संचार दिवसः
गुरुपूर्णिमा नित्यशान्तिबोध दिवसः

आत्मा तु नित्यं चेतनः निर्मलः सहजानन्द स्वरुपः। तस्मिन् तु परमात्म परम गुरुत्वं शाश्वतं स्थास्यति। स सार्द्धम् उषित्वा मम कल्याणाय मां संकेतति परमहं पापी इन्द्रिय विषयभोगासक्तः तं संकेतं बोद्धुं न क्षमः। तदर्थमेव कृतात्म साक्षात्कारकारः गुरुः भवेत्। प्रथमन्तु स्वात्मनि एव आत्मकल्याणत्वरा भवेत्। प्रत्येकं जनस्य स्वोन्मेषः एव प्रथमो गुरुः। सर्वमूलं प्रभुकृपा।

**विमलः हिन्दीभावानुवादः-** कल गुरूपूर्णिमा है। गुरु पूर्णिमा स्वगुरुत्वजागरण दिवस है। आत्मा की पूर्णता में प्रत्येक व्यक्ति में गुरूत्व समाहित है। पर बहु जन्म संसार सम्बन्ध से वह गुरूत्व प्रच्छन्न है। उसी के जागरणार्थ कृतात्मसाक्षात्कार सिद्ध गुरु सम्बन्ध अनिवार्य है। जिसका आधार मात्र मात्र मात्र आत्मकल्याण होता होता है। वहाँ कहीं से कोई भौतिक कामना नहीं होती है न कोई भौतिक सम्बन्ध होता है। न कोई उच्च नीच भेद संचरण होता है। दो आत्माओं के मध्य भेद संचरण क्यों? ऐसा कहीं से शास्त्र अनुसंधान नहीं है कि एक आत्मा गुरु ही होती है, दूसरी आत्मा शिष्य ही होती है। परम कृपालु समदर्शी के यहां ऐसा भेद कदापि सत्य नहीं है। साधु सन्त तो निसर्गतः विश्व कल्याण हितैषी होते हैं। गीताज्ञान सर्व लोक हितेरताः।

# शाब्दबोधाय वृत्ति ज्ञान मावश्यकम्

शाब्दबोधाय वृत्तिज्ञानमावश्यकम्। तत्र शाब्दिकमते तु वृत्तिर्द्विधा, शक्तिः व्यञ्जना च। शक्तेः ग्राहकाणितावत् - 'शक्तिग्रहं व्याकरणोपमानकोशाप्तवाक्याद्व्यवहारतश्च। वाक्यस्य शेषाद् विवृतेर्वदन्ति सान्निध्यतः सिद्धपदस्य वृद्धाः' इत्यभियुक्तोक्त्या व्याकरणादीनि। व्याकरणाद्यथा- 'दक्षस्यापत्यं दाक्षिः'1 इत्यत्र दाक्षिपदस्य दक्षापत्ये शक्तिग्रहः, 'अश्व इव प्रतिकृतिर्यस्य सः अश्वकः'2 इत्यत्र अश्वकपदस्य गर्दभे शक्तिः। उपमानाद्यथा - 'गोसदृशो गवयः' इति श्रुतस्य वने तथाकृतियुक्तपशुदर्शनात् गवयोऽयमिति ज्ञानम्। कोशाद्यथा - 'शम्भुरीशः पशुपतिरि'त्यादि। आप्तवाक्याद्यथा - अयमश्वपदवाच्यः इति। व्यवहाराद्यथा - 'अश्वमानय' इति श्रुते आनीतं पशुं दृष्ट्वा अश्वोऽयमिति ज्ञानम्। वाक्यशेषाद्यथा - 'यवमयश्चरुर्भवति' इत्यत्र यवशब्दस्य आर्य्यव्यवहारमनुसृत्य दीर्घशूकस्य, म्लेच्छव्यवहारमनुसृत्य कङ्गोश्च सन्देहे -
वसन्ते सर्वसस्यानां जायते पत्रशातनम्।
मोदमानाश्च तिष्ठन्ति यवाः कणिशशालिनः।।
इति वाक्याद् दीर्घशूकस्यैव ज्ञानं भवति।
विवृतिर्विवरणं, तस्माद्यथा - 'गौः सास्नादिमत्पिण्डमि'ति विवरणात्सास्नादिमत्पिण्डस्य गोपदवाच्यताज्ञानम्, यद्वा 'हरिर्वासुदेवः' इत्यत्र नानार्थकस्य हरिपदस्य वासुदेवेऽर्थे शक्तिग्रहः। सिद्धपदस्य सान्निध्याद्यथा - 'कमले मधुकरः पिबति मधु' इत्यादौ कमलपदसान्निध्यान्मधुकरपदस्य भ्रमरे शक्तिः, मधुपदस्य पुष्परसपदे च।

शक्तिविषये तार्किकमतम् - तत्र प्रथमं प्राचीननैयायिकाः एवं ब्रूवते - 'अस्माच्छब्दादयमर्थो बोद्धव्यः' इति अर्थविशेष्यिका पदप्रकारिका, 'इदं पदमिममर्थं बोधयतु' इति पदविशेष्यिकाऽर्थप्रकारिका ईश्वरेच्छा शक्तिः। एवञ्चोक्ता ईश्वरेच्छारूपा शक्तिरेव सम्बन्धोऽपि वर्त्तते। आधुनिकसङ्केतेष्वपि 'एकादशेऽह्नि पिता नाम कुर्य्यात्' इति श्रुतिवचनेन ईश्वरेच्छा भवत्येव। अस्मदादिषु अपभ्रंशेषु नामसु शक्तिग्रहस्तु शक्तिभ्रमेण लक्षणया वा जायते।

नव्यनैयायिकास्तु इच्छा एव शक्तिरिति मन्यन्ते । तेन आधुनिकसङ्केतेष्वपि प्रयोगकर्त्तुः इच्छासत्त्वात् शक्तिर्भवत्येव, लक्षणायाः आवश्यकता न स्यादिति लाघवम्। ईश्वरेच्छारूपायाः इच्छारूपायाः वा शक्तेः विषयतारूपः सम्बन्धः यद्यपि त्रिषु विषयेषु- पदे, अर्थे, शाब्दबोधे च विद्यते, तथा च विषयतासम्बन्धेन शक्तिमत्त्वं वाचकत्त्वम् अथवा वाच्यत्वमिति लक्षणेन अतिव्याप्तिदोषः स्यात्, तस्माद्-बोधनिष्ठजन्यतानिरूपितजनकतावत्त्वेन शक्तिविषयो वाचकः,3 पदजन्यबोधविषयत्वेन शक्तिविषयो वाच्यः4 इति बोध्यम्।

तार्किकमतखण्डनम् - तार्किकोक्ता ईश्वरेच्छारूपा शक्तिः न भवितुम् अर्हति। यतो हि यः पदपदार्थयोः सम्बन्धो भवेत्, सः एव शक्तिपदेन उच्येत। इच्छायाः सम्बन्धत्वाभावेन शक्तित्वाभावः। 'सम्बन्धो हि सम्बन्धिद्वयभिन्नत्वे सति द्विष्ठत्वे च सति आश्रयतया विशिष्टबुद्धिनियामकः।5 तथा च यः सम्बन्धिनोः आश्रयतायाः नियामकः, स एव सम्बन्धः कथ्यते। अत्र तु सम्बन्धिनौ पदपदार्थौ, तौ न इच्छायाः आश्रयौ, चेतने आत्मनि एव इच्छायाः आश्रयतासम्भवात्। अत एव घटशब्द इच्छावान्, तदर्थो वा इच्छावान् इति न व्यवहारः।

वैयाकरणमतम् - तत्रादौ कौण्डभट्टमतन्तन्निरसनञ्च प्रदर्श्यते - वैयाकरणभूषणसारे वाक्यपदीयकारिकया शक्तिस्वरूपमाह -
इन्द्रियाणां स्वविषयेष्वनादिर्योग्यता यथा।
अनादिरर्थः शब्दानां सम्बन्धो योग्यता तथा।।
इन्द्रियाणामित्यत्र निष्ठत्वं षष्ठ्यर्थः। स्वविषयेष्वित्यत्र निरूपितत्वं सप्तम्यर्थः। योग्यता कारणता। तथा चो-न्द्रियनिष्ठा इन्द्रियविषयघटादिनिरूपिता या कारणता सा यथा अनादिस्तथा सकलशब्दनिष्ठा घटादिनिरूपिता योग्यताऽपि अनादिः। एवञ्च घटादिविषयकचाक्षुषादिज्ञाननिरूपिता योग्यता इन्द्रियनिष्ठा यथाऽनादिस्तथा शब्दनिष्ठा अर्थविषयकज्ञाननिरूपिता योग्यताऽप्यनादिः। इयञ्च योग्यतारूपा शक्तिः पदार्थान्तरम्। बोधजनकत्वं शक्तिरिति भूषणकाराभिमतं मतम्। किन्तु बोधजनकत्वं शक्तिः अपि सम्बन्धो भवितुं नार्हति, पदे वृत्तितानियामकेन स्वरूपसम्बन्धेन स्थिता अपि पदार्थे तु वृत्तिताऽनियामकेन निरूपकतासम्बन्धेन तस्याः स्थितत्वात्।

मञ्जूषाकृन्मतम् - भट्टनागेशमते पदपदार्थयोः सम्बन्धान्तरमेव शक्तिः, तस्याः शक्तेः नाम वाच्यवाचकभावोऽस्ति। अस्याः शक्तेः बोधकः तादात्म्यसम्बन्धः6, तादात्म्यस्य च इतरेतराध्यासो वर्त्तते। पदार्थनिरूपिततादात्म्यवत् पदम्, पदनिरूपिततादात्म्यवान् अर्थः इति व्यवहारे प्रसिद्धत्वात् तादात्म्यस्य द्विष्ठत्वात्7 सम्बन्धत्वमुपपन्नम्। शक्त्या शाब्दबोधजननाय सम्बन्धः एव नियामको भवति। यथा दीपकादौ विद्यमाना प्रकाशिका शक्तिः वस्तु तावन्न प्रकाशयितुं प्रभवति यावत् प्रकाशस्य घटादिविषयस्य च संयोगसम्बन्धो न स्यात्। तस्मादेव प्रकाशेन सम्बद्धस्यैव घटादेः प्रकाशो भवति नासम्बद्धस्य।

| प्रकाशकः | शक्तिः | प्रकाशः | विषयः | सम्बन्धः | फलम् |
| --- | --- | --- | --- | --- | --- |
| दीपकः | प्रकाशकता | आलोकः | घटः | संयोगः | घटप्रकाशनम् |
| पदम् | वाच्यवाचकभावः | वाचकः(पदम्) | वाच्यः(अर्थः) | तादात्म्यम् | बोधः |

तथा च वाच्यवाचकभावरूपशक्तेः ज्ञानं तादात्म्यसम्बन्धेन भवति, तादात्म्यस्य च ज्ञानं शब्दार्थयोः परस्पराध्यासेन।

शक्तिभेदः - इयञ्च शक्तिः त्रिविधा - रूढिशक्तिः, योगशक्तिः, योगरूढिशक्तिश्च। तत्रादौ - रूढिशक्तिः कल्पित प्रकृति प्रत्ययार्थबोधक त्वासमानाधिकरणा या किञ्चिदर्थनिरूपिता शक्तिः सा रूढिरित्युच्यते। मणिनूपुरशब्दौ शब्दकर्त्तृरूपार्थं स्तुति सम्बन्ध्यग्रगमनकर्त्तारं वा न बोधयतः, अपितु रत्नमाभूषणविशेषं वेति रूढिशक्तिमत्त्वमनयोः। तथाहि समुदायार्थमात्रबोधकपदे शक्तिः रूढिः।
योगशक्तिः - अवयवार्थमात्रबोधकपदे शक्तिः योगः। यथा पाचक इत्यादौ। योगरूढिशक्तिः यत्रावयवशक्ति समानाधिकरणा च समुदायशक्तिस्तत्र योगरूढिशक्तिः। यथा पङ्कजादिपदे प्रकृति प्रत्ययार्थपङ्कजनिकर्त्तृत्व शक्तिसमानाधिकरणा पद्मेतिसमुदायशक्तिः, तस्-माद्योगरूढि शक्तिमत्वमस्य। क्वचित् योगरूढशब्देषु तात्पर्य्यग्राहकानुसारं रूढ्यर्थमात्रस्य योगार्थमात्रस्य वा बोधो भवति।

# 'अञ्जलिना जुहोति', 'अञ्जलिना सूर्य्यमुपतिष्ठते'

प्रयोजनम्, अनन्यथासाध्यफलमित्यर्थः, अस्योदाहरणम् - 'अञ्जलिना जुहोति', 'अञ्जालिना सूर्य्यमुपतिष्ठते' इति । एकहस्ताञ्जलि-वाचकस्य, हस्तद्वयाञ्जलिवाचकस्य च अञ्जनिशब्दस्य अञ्जलिना जुहोति (हवनं कुर्य्यात्। इत्यत्र हवनरूपस्य अर्थस्य प्रयोजनस्य कारणात् एकहस्ताञ्जलिवाच्ये शक्तिः, अञ्जलिना सूर्य्यमुपतिष्ठते (सूर्य्योपस्थापनं कुर्य्यात्) इत्यत्र सूर्य्योपस्थापनरूपप्रयोजनबलात् हस्तद्वयाञ्जलिवाच्ये शक्तिः निश्चीयते। प्रकरणम् - वक्तृश्रोतृबुद्धिविषयतेत्यर्थः, अस्योदाहरणम् - 'सैन्धवमानयेत्यादिः।' लवणबोधकाश्वबोधक सैन्धवशब्दस्य भोजनज्ञानरूपे प्रकरणे लवणार्थे यात्राज्ञानप्रकरणे अश्वार्थे च शक्तिः अवधार्य्यते। लिङ्गम् - लीनमर्थङ्गमयति यत् तल्लिङ्गमर्थाज्ज्ञापकमित्यर्थः, अस्योदाहरणम् - 'अक्ताः शर्कराः उपदधाती'ति। अञ्जनञ्च आर्द्रीकरणद्रव्यम् घृततैलादिकम्। शर्कराः इष्टिकाचूर्णानि। उपदधाति अग्न्याधानार्थं वेद्यां परिस्थापयेत्। तथाहि अक्ताः इत्यादिवाक्यस्य अञ्जनविशिष्टेष्टिकाचूर्णानि अग्न्याधानार्थं वेद्यां स्थापयेदित्यर्थः। अत्र वाक्ये अक्तपदार्थघटकेन अञ्जनशब्देन घृतेन, तैलेन अथवा जलेन केन आर्द्रीकरणीयमिति विशेषनिर्देशाभावः। तथापि तद्वाक्यसमीपे तेजो वै घृतमिति घृतस्तुतिवाक्यप्रयुक्तत्वात् यः स्तूयते स विधीयते इति मीमांसाशास्त्रीयन्यायेन घृतेसाधकाञ्जने शक्तिः विधीयते।

अन्यस्य शब्दस्य सन्निधिः - एकार्थमात्रवाचकपदसमीपोच्चारणमित्यर्थः, अस्योदाहरणम् - 'रामो जामदग्न्यः' इति । परशुरामबलरामदाशरथ्यादिवाचकस्य रामशब्दस्य जामदग्न्यपदसन्निधानात् जमदग्नेः अपत्यम् परशुरामार्थे शक्तिः अवधार्य्यते। सामर्थ्यम् - अचरितार्थशब्दार्थशक्तिः कारणता वेत्यर्थः, अस्योदाहरणम् - 'अभिरूपाय कन्या देया' इति। अभिरूपः अर्थात् सुन्दरः। कन्या अभिरूपाय सुन्दराय एव दीयते, पुनरपि अभिरूपाय इत्युक्ते सामर्थ्यात् विशेषणपदप्रयोगस्य सार्थक्यात् अभिरूपपदस्य अभिरूपतरे अतिशयसुन्दररूपवति इत्यर्थे शक्तिः लभ्यते। औचिती - औचित्यम्, योग्यता चार्थः, अस्योदाहरणम् - यश्च निम्बं परशुना यश्चैनं मधुसर्पिषा। यश्चैनं गन्धमाल्याद्यैः सर्वस्य कटुरेव सः।। श्लोकार्थस्तु - निम्बं यः परशुना, यः मधुसर्पिषा, यश्च गन्धमाल्याद्यैः छिन्द्यात्, सिञ्चेत्, पूजयेच्च, तस्य तस्य सर्वस्य कृते सः निम्बः कटुः अर्थात् तिक्तस्वादवान् एव भवति। श्लोकेऽस्मिन् क्रियापदाभावेऽपि औचित्यात् योग्यत्वात् परशुरूपकरणस्य छेदनार्थत्वप्रतीतेः छिन्द्यात् पदम्, मधुसर्पिःकरणस्य सेचना-र्थत्वप्रतीतेः सिञ्चेदिति पदम्, गन्धमाल्यादि करणस्य पूजनार्थत्वप्रतीतेः पूजयेदिति च पदमध्यह्रियते।








प्रयागराजे शहीद चन्द्रशेखर आजादस्य जयन्त्यवसरे अमर शहीदं चन्द्रशेखर आजादं प्रति नमनं चक्रुः जनैः श्रद्धांजलिः समर्पिता। शहीदस्थले मण्डलायुक्तः संजय गोयल महाभागः श्रद्धांजलिः समर्पितवान्।

# आदर्शपुरुषोत्तमः श्रीरामः



श्रीरामायणग्रन्थे श्रीरामस्य विषये अजानन्तः जनाः विरलाः एव लोके । श्रीरामायणी कथा श्रीवाल्मीकि मुनिना विरचिता वर्तते । गच्छता कालेन संस्कृतादतिरिच्य इतरभाषाभिरपि नानाविद्वद्भिः इयं कथा अनुसृता वर्तते । भगवान् श्रीरामः अनन्त-कोटि-ब्रह्माण्ड-नायकस्य परमपितुः परमेश्वरस्य अवताररूपः आसीत् । धर्ममर्यादायाः संरक्षणार्थं भारतखण्डस्य अयोध्यायां राज्ञः दशरथस्य पुत्रत्वेन जन्म अलभत । तत्समये राक्षसानां नग्नबीभत्सस्वरूपम्? एतावत् प्रचण्डमासीत् यत् ऋषिमुनीनाम्, गवाम्, ब्राह्मणानाञ्च जीवनं भीषणसङ्कटे पतित-मासीत् । यत्र यत्र शास्त्रविहितं यज्ञकर्मादिकं क्रियते स्म, राक्षसगणः तत् ध्वंसीकर्तुं सर्वदा तत्परः भवति स्म । राक्षसाणां राजा रावणः भारतभूमौ स्वकीयम् एकच्छत्रीयं राज्यं प्रतिष्ठापयितुं दशसु दिक्षु कपटजालं प्रसारितवान् आसीत् । देवानाम् आग्रह-अनुनय-विनयादीनां फलस्वरूपं भगवान् स्वयं स्वांशेन सह राम-लक्ष्मण-भरत-शत्रुघ्नरूपत्वेन अवतरितः अभूत् ।

भगवतः श्रीरामस्य आदर्श-चरित्रादीनां विवरण-विषये भिन्ने भिन्ने रामायणे प्राप्नुमः ; येषु वाल्मीकीयं रामायणम्, अध्यात्मरामायणम्, तथा परमभक्तेन गोस्वामितुलसीदासेन विरचितं श्रीरामचरितमानसञ्चेति प्रामुख्यं भजन्ते ।

श्रीरामः महान् गुणवान् आसीत् । धृतिः, क्षमा, दमः, अस्तेयम्, शौचम्, इन्द्रियनिग्रहः, धीः, विद्या, सत्यम्, अक्रोधः चेति मनुमहाराजेन उल्लिखिताः एते दशगुणाः सर्वे अपि श्रीरामे उपलभ्यन्ते स्म । महर्षिवाल्मीक्यनुसारं धैर्ये श्रीरामः हिमालयवत्-' धैर्येण हिमवानिव' इति ; क्षमायाञ्च पृथ्वीवत् - ' क्षमया पृथिवीसमः' इति । सत्यभाषणे तु तद्वंशः हि प्रसिद्धः -
रघुकुल रीति सदा चलि आई ।
प्रान जाहिं बरु बचन न जाई ।। इति ।
'रामो द्विर्नाभिभाषते' इत्येतद् वाक्यम् अस्माकं कृते आदर्शभूतमस्ति ।

'सर्वशास्त्रार्थतत्त्वज्ञः स्मृतिमान्प्रतिभानवान्' इत्यर्थात् श्रीरामःमहान् शास्त्रवित् आसीत् । सः महान् बुद्धिमान्, नीतिमान्, वाग्मी च आसीत् - 'बुद्धिमान्नीतिमान्वाग्मी' इति । सः यज्ञानां रक्षकः, स्वयं यज्ञकर्ता, महान् तपस्वी चापि आसीत् । सः विश्वामित्रस्य यज्ञरक्षार्थं राक्षसैः सह असकृत् युद्धं कृतवानासीत् ।

रामशत्रुः रावणः अपि तं तपस्विनम् आख्यातवान् अङ्गदाभिमुखम् एवम् -
'गर्भ न गयहु ब्यर्थ तुम्ह जायहु ।
निज मुख तापस दूत कहायहु ।।'

अतः एतत् स्पष्टं यत् भगवान् श्रीरामः धर्मस्य सर्वलक्षणानां पालनं कुर्वन् अस्मत्समक्षम् आदर्शं प्रस्तुतवान् वर्तते। सत्यपालने सः सदा दृढप्रतिज्ञः, द्वितीयः धर्मराजः इव आसीत् - 'सत्ये धर्म इवापरः' इति वाल्मीकिवचनम् ।

भगवान् श्रीरामः धर्मावतारः कथ्यते । तस्य पवित्रचरित्रात् शिक्षाग्रहणं प्राप्य अस्माभिरपि स्वश्रेयसे, दैनन्दिके स्वजीवने, तद्दिनचर्यानुकूलां स्वदिनचर्यां विधाय सम्यक् तदाचरणीयममिति, शम् ।

**असम राज्य भारत लवर्षस्य प्रकाण्ड विद्वान पण्डित नारदोपाध्याय महाभागः**

# सुवर्णवेशः भक्ताः दूरदर्शन माध्यमेन इममलौकिकं वेशं द्रष्टुं समर्था अभवन्



पुर्य्यां श्रीमन्दिरस्य सिंहद्वारसम्मुखे विशालेऽस्मिन् बडदाण्डे रथेषु विग्रहत्रयाणां भव्यः विश्वप्रसिद्ध-सुवर्णवेशः सेवकवृन्दैः (भण्डारमेकाप) संपूर्णरीत्या समनुष्ठितः । अयं वेशः विलम्बितरात्रिपर्यन्तं दृश्यमानोऽभवत् । भक्ताः दूरदर्शन माध्यमेन इममलौकिकं वेशं द्रष्टुं समर्था अभवन् । आषाढमास-शुक्लपक्ष-एकादश्यां शुभपुण्यतिथौ अस्य महनीयो वेशो जायते । तस्मिन् समये श्रीविग्रहाः नानारत्नखचित- स्वर्णरौप्यादि धातूनिर्मितानि अलंकाराणि धारयन्ति । तानि अलंकाराणि भण्डारगृहे तिष्ठन्ति । यद्यपि जगन्नाथमन्दिरे विग्रहाणां कृते 138 प्रकाराणि भूषणानि गच्छितानि सन्ति तथापि तेषु श्रीभुज-श्रीपद-चक्र-शंख-किरीट-तिलक-चन्द्रिका- ओडिआणि-कमरपट्टिका-कुण्डल-आडकानि-मुसल-हल-तडगि-झोबाकण्ठि-घागडामाल-बाहाडामाल-तडगि-सेवतीमाल-कदम्बमाल्यादीनि बहुनि आभूषणानि प्रमुखानि भवन्ति। एतेषां धारणात्परं विग्रहाः अतीव रमणीयाः दृश्यन्ते ।

**नन्दप्रदीप्तकुमारः**

# संस्कृतं किमर्थम् आवश्यकम् केन वा सरल-प्रकारेण एतत् शिक्षितुं शक्यते




**संस्कृतमधिकृत्य स्वामिना विवेकानन्देन उक्तमस्ति यत् संस्कृतशब्दानां प्रौढिः मधुरिमा अर्थसम्पुष्टिः च अन्यभाषाशब्दानां न सन्त्येव**

नात्र केवलं संस्कृत-महिम्नो गानम् अभीष्टं मम अहन्तु केवलं निजानुभवाधारेण विवच्मि जगति साम्प्रतं स्फुटमिदं तथ्यं यत् महर्षेः पतञ्जलेः अष्टाङ्ग-योगाभ्यासः सर्वेषामपि लाभाय कल्पते, तद्वद् आयुर्वेदानुसरणं समेषामपि कृते लाभप्रदम् भवेद्वा सः भारतीयो वा भारतीया आहोस्वित् वैदेशिको वा वैदेशिकी सर्वेषामपि कृते संस्कृताध्ययनं योगायुर्वेदवदेव परमं लाभप्रदम् संस्कृतमधिकृत्य स्वामिना विवेकानन्देन उक्तमस्ति यत् संस्कृतशब्दानां प्रौढिः मधुरिमा अर्थसम्पुष्टिः च अन्यभाषाशब्दानां न सन्त्येव इति बौद्धमतस्य अधःपतनस्य एकं कारणम् अपि तेषां संस्कृतावगणनम् एव राष्ट्रपुरोगतये भरणसारथ्यं कर्तुं संस्कृतज्ञाः एव शक्ताः इति

विषये कश्चन मां पृच्छति यत् किमर्थं संस्कृतम् आवश्यकम् ? अथवा साम्प्रतम् एकविंशे शताब्दे संस्कृतस्य किं नाम उपयोगित्वम्? तदा अहन्तु इदमेव उत्तरामि यत् यथा जीवनार्थं जलं श्वसनं चावश्यके भवतः तद्वदेव अस्माकं भारतीयानां सनातन-वैदिक-धर्मावलम्बिनां च कृते संस्कृतानुसरणं संस्कृताङ्गीकरणं संस्कृतावलम्बनं चावश्यकम् विषयेस्मिन् नात्र मम कश्चन दुराग्रहः अहन्तु अनुभवाधारेण वदामि आकाशवाण्यां दूरदर्शने च संस्कृत-वार्ता-प्रसारणनिरते एतावति 45-वर्षावधिके काले अनेके तादृशाः अनुभवाः अभवन् यत् नाहं संस्कृत-वार्ता-प्रसारकः अभविष्यं चेत् ममास्तित्वमेव नाभविष्यत् ‘अस्माकं भारतीयानां सनातन-वैदिक-धर्मावलम्बिनां च कृते संस्कृतानुसरणं...’ इत्यत्र ‘सनातन-वैदिक-धर्मावलम्बिनां’ इति शब्दाः साशयं लिखिताः सन्ति ।

कश्चन एवमपि प्रष्टुं शक्नोति यत् किं ये भारतीयाः न सन्ति वा वैदिक-सनातन-धर्मावलम्बिनो नैव भवन्ति, किं ते जीवितुं वा श्वसितुं वा नैव शक्नुवन्ति अवश्यम्, नात्र कश्चन सन्देह-लेशोऽस्ति परन्तु येन विधिना वयं भरत-वंशिनः आर्य-श्रेष्ठाः देवपूज्याः जगद्गुरु-पदवी-धारिणः च सन्तः सम्पूर्ण-जगतः शुभाकाङ्क्षिणः च भवन्तः सुदीर्घ-काल-पर्यन्तां विश्वजनीन-यात्रां वा लोक-लोकोत्तर-यात्रां विहितवन्तः, तदेव वैशिष्ट्यम् अस्मदीयम् अत एव अस्माकं भारतीयानां सनातन-वैदिक-धर्मावलम्बिनां च कृते संस्कृतानुसरणं संस्कृताङ्गीकरणं संस्कृतावलम्बनं चावश्यकम् इतोऽपि अनेकानि अपराणि कारणानि सन्ति यानि अस्मान् तथ्यमिदं दृढतया स्वीकर्तुं प्रेरयन्ति यत् संस्कृतं विना अस्माकम् इतरत् प्रेयः श्रेयः चाभिज्ञानं नैवास्ति ।

नात्र केवलं संस्कृत-महिम्नो गानम् अभीष्टं मम अहन्तु केवलं निजानुभवाधारेण विवच्मि जगति साम्प्रतं स्फुटमिदं तथ्यं यत् महर्षेः पतञ्जलेः अष्टाङ्ग-योगाभ्यासः सर्वेषामपि लाभाय कल्पते, तद्वद् आयुर्वेदानुसरणं समेषामपि कृते लाभप्रदम् भवेद्वा सः भारतीयो वा भारतीया आहोस्वित् वैदेशिको वा वैदेशिकी सर्वेषामपि कृते संस्कृताध्ययनं योगायुर्वेदवदेव परमं लाभप्रदम् संस्कृतमधिकृत्य स्वामिना विवेकानन्देन उक्तमस्ति यत् संस्कृतशब्दानां प्रौढिः मधुरिमा अर्थसम्पुष्टिः च अन्यभाषाशब्दानां न सन्त्येव इति बौद्धमतस्य अधःपतनस्य एकं कारणम् अपि तेषां संस्कृतावगणनम् एव राष्ट्रपुरोगतये भरणसारथ्यं कर्तुं संस्कृतज्ञाः एव शक्ताः इति महर्षि-अरविन्द-लोकमान्य-टिळक-स्वामिचिन्मयानन्द-श्रीरामचन्द्रडोंगरे-मोरारीबापू-रमेशभाई-ओझा-अमृतानन्दमयीत्यादिभिः अनेकैः आचार्यैः अनेकैः वाक्यैः अनेकेषु सन्दर्भेषु च संस्कृताध्ययनस्य अनिवार्यत्वं प्रस्तुतम् डॉ. मैक्समूलर-गेथे-प्रभृतयः पाश्चात्यविपश्चितः अपि संस्कृताध्ययनस्य महत्वं सुतरां प्रतिपादितवन्तः एनां भाषां विना अथर्ववेदतः आरब्धस्य आयुर्वेदस्य सुष्ठु अध्ययनम् असाध्यम् ज्यौतिषे महाशास्त्रे संस्कृतेतरच्छात्राणां प्रवेशाधिकारः नास्ति वेदान्तादिसकलशास्त्राणाम् अध्ययनाय संस्कृतमनिवार्यम् काव्यरसास्वादकैः अवश्यम् अध्येयं भवति संस्कृतम् भाषान्तरानुवादाभ्यां यत् पठनं भवति तत्तु पूर्णास्वादने रसभङ्गहेतुत्वेन समुपकल्प्यते भूभृत् शब्दस्य भूमिं भरति इति शब्दार्थः शास्त्रतत्त्वार्थश्च अनुवादे उक्तेन माउण्टेन् इति शब्देन। कथं ज्ञातुं शक्यते ? यया भाषया लिखितं तया एव पठनीयं भवति काव्यम्। उत्तमोत्तम-काव्यानि संस्कृते एव सन्ति यानि अपठित्वा काव्यास्वादनं पूर्णं न भवति अतः संस्कृतं काव्यास्वादकैः अपि पठनीयम् भारतेतिहासं ज्ञातुं ये इच्छन्ति तेषां प्रबलं साधनम् एषा एव भाषास्ति तैः वेदेतिहास-पुराणादीनाम् आश्रयः करणीयः। शास्त्रकारैः तन्त्रज्ञैः भाषाशास्त्रज्ञैः च संस्कृताध्ययनेन महान् लाभः अधिगम्यते इति समुदीरितं नैकत्र सर्वोपरि व्यक्तित्वविकासेच्छुः यः सोऽपि संस्कृताध्ययनशीलः स्यात् ।

एषः विज्ञानस्य तन्त्रज्ञानस्य च युगः । अस्य महादानं कम्प्यूट-च्यन्त्रम् । तत्रापि अतितरां समुपयोगिनी सहजभाषा संस्कृतभाषा एवेति तज्ज्ञानाम् अभिमतम् । महामुनेः पाणिनेः काले तादृशं वा किञ्चित् कम्प्यूटरयन्त्रम् आसीत् इति चिन्तनमुद्दीपयति तस्य सूत्रशैली। अहं स्वीयेषु ‘संस्कृतं पठ : आधुनिको भव इति शृङ्खला-व्याख्यानेषु पौनःपुनिकं सबलञ्च कथयामि यत् महामुनिना पाणिना संस्कृत-व्याकरणं शब्दानुशासनत्वेन व्यापकं सुव्यवस्थितं गणितात्मकं वैज्ञानिकम् अनुशासनात्मकं च विधातुम् ‘अष्टाध्यायी’ति ‘सोफ्टवेयर’-निर्माणं कृतम् ।

एवं च, संस्कृति-साहित्य-विज्ञान-तन्त्रज्ञानादिषु सर्वत्र विराजमाना संस्कृतभाषा स्वाभिमानं स्वाश्रयं स्वराष्ट्रस्नेहं सहिष्णुतां संस्कृतिं सम्पत्तिं च सततं सम्वर्द्धयति । अत एव संस्कृतं राष्ट्रस्य प्राणवायुः सनातनधर्मस्तु राष्ट्रस्य जीवात्मा चेति कथ्यते । भारतराष्ट्रस्य अस्मिता रक्षणीया चेत् संस्कृताध्ययनं हि परमावश्यकम् । महामुनिना पतञ्जलिना व्याकरण-महाभाष्ये प्रोक्तम् - ’एकः शब्दः सम्यग् ज्ञातः सुप्रयुक्तः च स्वर्गे लोके च कामधुक् भवति’ इति प्रमाणेनैव संस्कृताध्ययनस्य महत्त्वं समुपयोगित्वञ्च सरलतया अवगन्तुं शक्यते। साम्प्रतं प्रश्नः समुदेति यत् केन वा सरल-प्रकारेण एतत् शिक्षितुं शक्यते? अस्तु, प्राचीना अध्ययन-शैली तु प्रायेण गुरुकुल-पद्धतिरेव आसीत् गच्छता कालेनात्र अनेकविधं परिवर्तनं जातं जीवन-पद्धतौ शिक्षा-पद्धतौ च एवमपि वक्तुं शक्यते यत् साम्प्रतं संस्कृत-शिक्षणं पूर्व-कालापेक्षया सरलतरं सञ्जातम् सामान्यतया संस्कृत-शिक्षणं हि पारम्परिक-संस्कृत-पाठशालासु, वैदिक-पाठशालासु, विद्यालयेषु, महाविद्यालयेषु, विश्व-विद्यालयेषु च विधीयते एव परञ्च साम्प्रतिके समुन्नते सूचना-प्रविधि-काले सङ्गणक-अन्तर्जाल-माध्यमेन अध्ययन-अध्यापनयोः परिधिः व्यापकतरः सुगमश्च सम्वृत्तः वयं साम्प्रतम् अनेकविधैः विद्युदाणविकैः बह्वायाम-युतैः सञ्चार-माध्यमैः सामाजिक-सञ्चार-माध्यमैः चापि संस्कृत-शिक्षणं कर्तुं पारयामः अधुनातनैः समुपायैः प्रभृति-समुपकरणैः. सरलतया संस्कृतं शिक्षतुं शक्नुमः।

## रम्या रामायणी कथा




**भक्तिर्मुक्तिविधायिनी भगवतः श्रीरामचन्द्रस्य हे**
**लोकाः कामदुघाङ्घ्रिपद्मयुगलं सेवध्वमत्युत्सुकाः ।**
**नानाज्ञानविशेषमन्त्रविततिं त्यक्त्वा सुदूरे भृशं**
**रामं श्यामतनुं स्मरारिहृदये भान्तं भजध्वं बुधाः ?**

अद्य भगवद्भक्तिभूषणचरित्रं प्रस्तूयते।

भगवद्भक्तिभूषणो श्रीभरतमहाभागो महाराजदशरथस्य द्वितीयपुत्रासीत् । भगवती कैकेयी श्रीभरतस्य माता आसीत। महाराजकुशध्वजस्य पुत्री माण्डवी भरतस्य धर्मभार्यासीत।
यदा महाराजदशरथेन श्रीरामस्य राज्याभिषेकः आयोजितः, तदा श्रीभरतः स्वमातुलगृहं गत आसीत् । भगवतीकैकेयीवचनानुगुणं श्रीरामो वनवासार्थं गतः । शोकेन श्रीदशरथ इहलोकयात्रां समापितवान् । श्रीभरतः त्वरया अयोध्यां प्रति अगन्तव्यः इति वार्ता प्रेषिता । पूर्वस्मिन् दिने भरतः दुःस्वप्नं दृष्टवान् आसीत् प्रेषिते पत्रे अपि राजमुद्रा न आसीत् । आगन्तुं विशेषव्यवस्था कल्पिता आसीत् । अनेन पितुः विषये बहु चिन्ताक्रान्तः अभवत् । अयोध्या गमनानन्तरं वसिष्ठः पूर्वजानां रघुवंशीयाणां मूर्तिदर्शनपूर्वकं दशरथस्य मरणं ज्ञपितवान् । तदा पितुः मरणवार्तां ज्ञात्वा बहु खिन्नः अभवत् ।भासमहाकविः स्वीयनाटके प्रसङ्गमेनं मनोज्ञतया चित्रितवान्। यदा भरतः अयोध्यां प्रविष्टवान् तदा स्वमातुः नीचबुद्धया अग्रजः रामः वनं गतवान् इति ज्ञातवान् । तदा अग्रजस्य विषये विद्यमानया महत्या प्रीत्या मातुः वधं कर्तुमुद्युक्तः । वसिष्ठवचनानुगुणं वधं नाचरितवान्। स्वदेहत्यागमपि कर्तुमुद् युक्तः भरतः वसिष्ठेन वारितः भ्रातृविहीनायाम् अयोध्यायां सिंहासने नोप विषामीति मातुः समीपे उक्त्वा श्री राम मन्विषन् वनं प्रति प्रस्थितः । कैकेयी वचनम् अल्पमिति मत्वा अयोध्यां प्रत्यागत्य सिंहासन मधिरोढुं श्रीरामस्य सकाशे विनम्रं विज्ञापयति । परं श्रीरामः नाङ्गीकुरुते । श्री रामस्याधिष्ठाने अयोध्या सिंहासने नाहमुपा विषामीति श्रीरामस्य समीपे उक्त्वा तस्य पादुकां प्रसाद रूपेण अपृच्छत् । पादुकां शिरसि वहन् अयोध्यायां राजसिंहासने संस्थाप्य श्री रामस्य वनवास पूर्ति पर्यन्तं नन्दि ग्रामे तपः आचरितवान्। शम्।


आचार्य अरविंद पांडेय

**-क्रमशः**

# वैमानिकदृष्टिः जलप्लावनसमये प्रधानमन्त्री विमानेन हेलिकाप्टरयानेन वा गत्वा आकाशतः सर्वेक्षणं करोति

यदि कश्चन विमाने हेलिकाप्टरमध्ये वा उपविश्य अधः भूमिं पश्येत् तर्हि बहुदूरं यावत् द्रष्टुं शक्नुयात, विशालं किञ्चन चित्रं द्रष्टुं शक्नुयात् च। अतः एव जलप्लावनसमये प्रधानमन्त्री विमानेन हेलिकाप्टरयानेन वा गत्वा आकाशतः सर्वेक्षणं करोति। तथा विमानतः विशालक्षेत्रदर्शनम् इत्यर्थे एव वैमानिकदृष्टिः इति अत्र शब्दप्रयोगः क्रियते।
संस्कृतक्षेत्रे विद्यमानाः शिक्षकाः प्राध्यापकाः कुलपतयः निदेशकाः संस्थाप्रमुखाः कार्यकर्तारः वा सीमितक्षेत्रे निर्दिष्टयोजनायां परिमितकालबन्धनेन स्वल्पसम्पदा च कार्यं कुर्वन्ति। तस्मात् तेषां कायञ्योजना सहजतया तत्स्थानीया व्यवस्थाधीना अल्पावधिका तत्काललाभप्रदा च भवति।
यद्यपि कार्ययोजना प्रत्यक्षकार्यं च स्थानीयस्तरे एव भवति तथापि सा योजना विशालस्य देशस्य वर्तमानभविष्ययोः सर्वासाम् आवश्यकतानां पूर्त्यर्थं करणीयानां कार्याणां महत्तरयोजनायाः अङ्गतया भवेत। तथा कार्यचिन्तनाय नेत्रयोः पुरतः विशालं भव्यं च किञ्चन चित्रम् आवश्यकम्। तत् चित्रं वैमानिकदृष्ट्या प्राप्तुं शक्यते। सार्वत्रिकी वर्तमानस्थितिः अपि वैमानिकदृष्ट्या ज्ञातुं शक्यते।
कोटिशः जनाः (भारतीयाः अभारतीयाः च) संस्कृतं पठेयुः, संस्कृतेन वदेयुः लिखेयुः च। लक्षशः जनाः काव्यानि शास्त्राणि च पठेयुः। संस्कृतस्य विद्यालयाः महाविद्यालयाः विश्वविद्यालयाः च छात्रसम्पन्नाः अर्थसमृद्धाः गुणवृद्धाः च स्युः। संस्कृतभाषा संस्कृताध्ययनं च मुख्यधाराशिक्षणस्य शोधक्षेत्रस्य च अङ्गभूतं सर्वस्तरव्याप्तं सर्वक्षेत्रप्रसृतं च भवेत। पाण्डुलिपिग्रन्थानां सम्पादनेन, प्रकाशनेन, संशोधनेन च इतरभाषाकृतीनां संस्कृतानुवादेन, स्वतन्त्रसंस्कृतकृतिरचनया च संस्कृतवाङ्मयं समकालिकं सुसमृद्धं च भवेत् इति एतानि पञ्च लक्ष्याणि अग्रिमाणि त्रिंशत् वर्षाणि यावत् अस्माकं सर्वेषां करणीयानि कार्याणि स्युः। एतत् भव्यं चित्रं सर्वदा अस्माकं मनसि स्थापयित्वा वयं कार्यं चिन्तयेम।
एतानि पञ्च कार्याणि कैः करणीयानि? शैक्षिकसंस्थाभिः सामाजिकसंस्थाभिः च इति उत्तरं चेदपि तत्र शैक्षिकसंस्थानाम् उत्तरदायित्वेषु स्वयं करणस्य तथा च सामाजिकसंस्थानाम् कार्ये योजनस्य चेति उभयविधम् उत्तरदायित्वं भवति। अतः संस्कृतस्य भविष्यतः निर्माणे संस्कृतशिक्षाजगतः प्रमुखाणां महती भूमिका भवति। यदि ते कर्तव्यं न अवगमिष्यन्ति, अथवा अवगत्य अपि न प्रवर्तन्ते, तर्हि वर्तमानः ऐतिहासिकः अवसरः हस्तच्युतः भवेत्।
शैक्षिकसंस्थासु प्रमुखाणां व्यवस्थात्मकानां कार्याणाम् आधिक्यकारणेन शैक्षिकगतिविधिषु न्यूनता न भवेत। विद्यमानम् अपि नष्टं न भवेत् इति चिन्तनेन पाठ्यक्रमेषु परिवर्तने कर्तव्ये अधैर्यं न भवेत्। परम्परया आगतानां पाठ्यक्रमाणां विषये अभिभूतेन मनसा नूतनानां मार्गाणां विषये अन्धेन न भवितव्यम्। नूतनशिक्षानीतिः इति कश्चन महान् अवसरः। परं संस्कृतस्य भविष्यतः विषये निश्चिन्तस्य जनस्य कृते अथवा अनवगतभविष्यस्य जनस्य कृते अवसरः अनवसरः वा, तेन कोपि भेदः न भवति। सिषाधयिषवः धैर्यवन्तः अग्रेसराः जनाः तु अनवसरे अपि अवसरान् सृष्ट्वा गहनारण्येषु पर्वतोपत्यकेषु च मार्गान् निर्माय अग्रे गच्छन्ति, गमयन्ति च।
कस्याश्चित् भाषाकक्ष्यायाः भाषाविद्यालयस्य भाषामहाविद्यालयस्य भाषाविभागस्य भाषाविश्वविद्यालयस्य च आत्मा प्राणाः वा सा भाषा एव भवति। संस्कृतसम्बन्धे सम्पूर्णे देशे वैमानिकदृष्ट्या पश्येम चेत् प्रथमं चित्रं स्पष्टं भवति यत् सा संस्कृतभाषा भाषारूपेण सामान्यतः तत्र कुत्रापि नास्ति इति। तथा चेत्, किञ्च तद्विषये अस्माकम् एव प्रयत्नः अपर्याप्तः चेत्, परिस्थितिपरिवर्तनाय अस्माकं योजना अपि काचित् नास्ति चेत् संस्कृतस्य कथं वा उन्नतिः स्यात्?



**लक्षशः जनाः काव्यानि शास्त्राणि च पठेयुः**

कोटिशः जनाः (भारतीयाः अभारतीयाः च) संस्कृतं पठेयुः, संस्कृतेन वदेयुः लिखेयुः च। लक्षशः जनाः काव्यानि शास्त्राणि च पठेयुः। संस्कृतस्य विद्यालयाः महाविद्यालयाः विश्वविद्यालयाः च छात्रसम्पन्नाः अर्थसमृद्धाः गुणवृद्धाः च स्युः। संस्कृतभाषा संस्कृताध्ययनं च मुख्यधाराशिक्षणस्य शोधक्षेत्रस्य च अङ्गभूतं सर्वस्तरव्याप्तं सर्वक्षेत्रप्रसृतं च भवेत। पाण्डुलिपिग्रन्थानां सम्पादनेन, प्रकाशनेन, संशोधनेन च इतरभाषाकृतीनां संस्कृतानुवादेन, स्वतन्त्रसंस्कृतकृतिरचनया च संस्कृतवाङ्मयं समकालिकं सुसमृद्धं च भवेत् इति एतानि पञ्च लक्ष्याणि अग्रिमाणि त्रिंशत् वर्षाणि यावत् अस्माकं सर्वेषां करणीयानि कार्याणि स्युः। एतत् भव्यं चित्रं सर्वदा अस्माकं मनसि स्थापयित्वा वयं कार्यं चिन्तयेम।

नूतनशिक्षानीतिसम्बन्धे याः सज्जताः संस्कृतशिक्षाजगति भवेयुः ताः जायमानाः सन्ति वा इति वैमानिकदृष्ट्या पश्येम चेत् नेति अपर्याप्तमिति वा दृश्येत। नवसामग्रीनिर्माणाय ये पूर्वप्रयोगाः भवेयुः ते जायमानाः न सन्ति। 2020-राष्ट्रियशिक्षानीतेः कारणतः संस्कृतशिक्षणे नवं किम् आगच्छेत् इति कुतूहलं सर्वेषु संस्कृतानुरागिषु उत्पन्नम् अस्ति। संस्कृतशिक्षाजगतः प्रमुखाः तेषु संस्कृतप्रेमिषु निराशतां न उत्पादयेयुः इति आशास्महे।
राष्ट्रियशिक्षानीतेः निमित्तं सद्यः करणीयानि कार्याणि इति कश्चन लेखः मया सम्भाषणसन्देशे गतस्य नवम्बरमासस्य अङ्के लिखितः आसीत। तस्य पठनाय अत्र।

तस्मिन् लेखे उक्तानां विषयाणाम् अनुगुणं भवतः शिक्षणसंस्थायां विभागे राज्ये शिक्षकसङ्घे वा कार्यं प्रचलति वा इति वैमानिकदृष्ट्या अवलोकनं क्रियताम्। न प्रचलति चेत् सत्वरं कार्यम् आरभ्यताम्।
अद्य सर्वेण अपि संस्कृतस्य शिक्षकेण, विद्यालयेन, महाविद्यालयेन, प्राध्यापकेन, विश्वविद्यालयेन वा कीदृशाः कथं च पाठ्यक्रमाः रचनीयाः इति मुख्यः प्रश्नः। 1) छात्राः किमर्थम् आगच्छेयुः कथम् आगच्छेयुः च 2) आगताः छात्राः भाषायां विषयेषु कौशलेषु चेति त्रिषु अपि निपुणाः कथं भवेयुः 3) अध्ययनानन्तरं छात्राः भाविजीवने कुत्र गच्छेयुः किं वा कुर्युः इति एतेषां त्रयाणाम् अपि प्रश्नानाम् उत्तराणि न चिन्त्यन्ते चेत् संस्कृतस्य वर्तमानानां समस्यानां निवारणं न भविष्यति। छात्रकेन्द्रितचिन्तनम् एव अद्यतनी आवश्यकता। छात्रकेन्द्रितं चिन्तनम् इति विषये शिक्षाक्षेत्रे द्वितीयप्रश्नः प्रधानः आयामः भवति। परम् अत्र प्रथमतृतीयप्रश्नरूपौ अन्यौ द्वौ आयामौ योजितौ। छात्रकेन्द्रितचिन्तने त्रयाणाम् अपि प्रश्नानां चिन्तनम् अवश्यं करणीयम्।

छात्रकेन्द्रिताः नूतनाः पाठ्यक्रमाः चिन्तनीयाः, विद्यमानपाठ्यक्रमाणां परिवर्तनं करणीयं वा। पाठ्यक्रमचिन्तनं नाम प्रथमस्य तृतीयस्य च प्रश्नयोः चिन्तनं विना केवलं द्वितीयस्य प्रश्नस्य चिन्तनं न। अद्यत्वे अस्माभिः केवलं द्वितीयस्य विचारः क्रियते। प्रथमतृतीययोः चिन्तनं प्रकृतम् अपर्याप्तम् अस्ति। तृतीयस्य प्रश्नस्य उत्तरानुगुणं द्वितीयस्य चिन्तनं करणीयम्। प्रथमद्वितीययोः प्रश्नयोः उत्तरानुगुणं यस्य पाठ्यक्रमस्य निर्माणं क्रियेत तत् प्रथमस्य प्रश्नस्य समाधानं कुर्यात् अपि।

अवसराः सर्वदा एव भवन्ति। केचन तान् द्रष्टुं शक्नुवन्ति केचन न इति एतावदेव वास्तविकम्। अद्य संस्कृतस्य विषये अपि तथैव। तृतीयस्य प्रश्नस्य उत्तरं सर्वकाराः दद्युः इति मा चिन्त्यताम्। सर्वकाराः न कुर्वन्ति इति अद्यावधि अनुभवं बुद्धिमन्तः अवगच्छेयुः। सर्वकारसाहाय्यं विना एव वर्तमानजगति एव इदानीम् अपि संस्कृताय बहवः अवसराः सन्ति। अस्माभिः नेत्रे उद्घाट्य वैमानिकदृष्ट्या द्रष्टव्यम् इति एतावदेव अपेक्षितम्!

## देशप्रेमिहुतात्मनां बलिदानमनुत्तमम्

देशप्रेमिहुतात्मनां बलिदानमनुत्तमम्
उत्तमं हि उत्तमं महनीयं महत्तमम्
सम्यक् साधु सुशोभनं सत्यं शिवञ्च सुन्दरम्
प्रेरणातिप्रेरितं झर्झरझरझङ्कृतम्
डमडमडमडाङ्कृतं चञ्चुरचमूचञ्चितम्
दुर्गमपथे अञ्चितं क्लिष्टकर्मकर्षितम्
मर्मरमारमर्षितं दुर्धरधाराधर्षितम्
भीषणभयभञ्जितं घनघनघोरगर्जितम्
वैरिवैरवारितं गर्वितगरगञ्जितम्
खण्डखण्डखण्डितं शत्रुरक्तरञ्जितम्
नेति नेति नाशितं दर्पदलनदर्पितम्
रङ्गितरणरञ्जितं स्यन्दितशोणशोणितम्
मण्डलमणिमण्डितं हर्षणपरहर्षितम्
जनगणमनोरञ्जितं देशभक्तिसञ्चितम्
मातृदीक्षादीक्षितं मन्त्रभावचोदितम्
जयजयनादनन्दितं हृदये हृदये स्पन्दितम्
गगने पवने ध्वनितं वदने वदने स्वनितम्
मातरं भोः ! मातरं वन्दे मातरम्
वन्दे मातरं भोः ! वन्दे मातरम्
वन्दे मातरं वन्दे मातरम्
वन्दे मातरं वन्दे मातरम् ।।

## सूर्यः पवनः च!

सूर्यपवनयोर्मध्ये एकदा विवादः सञ्जातः आसीत् यत् तयोः मध्ये कः शक्तिशाली इति। पवनः कथयति अहं शक्तिशाली सूर्यः अपि कथयति अहं शक्तिशाली इति। इदानीं कः अधिकः शक्तिशाली इति तौ परीक्षितुम् एकम् उपायं चिन्तितवन्तौ। तदानीम् एकः मनुष्यः तस्य शरीरे प्रच्छदम् ऊढ्वा गच्छन् आसीत। तं दृष्ट्वा तौ निर्दिष्टं कृतवन्तौ यद् यः तस्य मनुष्यस्य शरीरात् प्रच्छदम् अपसारयितुं शक्नोति सः अधिकः शक्तिशाली इति। प्रथमं पवनस्य पर्यायः। तदा पवनः अत्यन्तं वेगेन वायुं चालयितुम् आरब्धवान्। वायुना सह वृष्टिः अपि। यावता वेगेन वायुः चलति तावता दृढेन सः मनुष्यः तस्य हस्ताभ्यां प्रच्छदं गृह्णाति स्म। पवनः बहुधा चेष्टां कृतवान् चेदपि तस्य प्रच्छदम् अपसारयितुं न अशक्नोत्। तत्पश्चात् सूर्यस्य पर्यायः। इदानीं सूर्यः स्वस्य प्रतापेन तापं प्रदातुम् आरब्धवान् ।

**प्रेरणाश्रोत**
जगदगुरू शंकराचार्य ज्योतिष्पीठ काशी पीठाधीश्वर ब्र.ली. स्वामी विद्यानंद सरस्वती जी महराज (मौनी जी), शाश्श्वतानन्द सरस्वती जी महाराज।

**संरक्षक मण्डल**
योग गुरू स्वामी आनन्द गिरि जी (बांध स्थित बड़े हनुमान जी )
डॉ भगवत् शरण शुक्ल प्रोफेसर-व्याकरण विभाग-संस्कृतविद्या धर्मविज्ञान संकाय काशी हिन्दू विश्वविद्यालय वाराणसी
प्रमोद बंसल निदेशक-महारानी चाय, प्रयागराज

**सलाहकार**
श्रीमती अनामिका चौधरी (सदस्य राज्य महिला आयोग)
डा. पुष्पा पाल (एमजीएम हास्पिटल)
- सुनील सराफ (अवतार केमिस्ट)
-पं. देवेन्द्र प्रसाद त्रिपाठी
-एसो. प्रो. डॉ. मुरली मनोहर द्विवेदी
-डॉ. शम्भुनाथ त्रिपाठी (अंशुल)
-डा. मोरार जी त्रिपाठी
-आचार्य कुशलदेव ( प्रवक्ता गुरुकुल महाविद्यालय ततारपुर हापुड़।)
-महेश जी कपूर
डा. कृष्णानन्द पाण्डेय
फादर - थॉमस कुमार
उपसम्पादक - विनम्र शुक्ल
विशेषवार्ताहरः डॉ प्रदीप्त कुमार नंदः

**प्रयागराज ( इलाहाबाद )**
RNI No. : UPSAN/2018/76680
स्वामी मुद्रकः प्रकाशकश्च **आनन्द नारायण शुक्ल** द्वारा रमा प्रिन्टिग प्रेस, 53/25/1,ए बेली रोड, नया कटरा, प्रयागराज से मुद्रित एवं 1286बी/541बी नेहरू नगर मीरापुर, प्रयागराज से प्रकाशित।
मो.-9415633297
संपादक-राकेश शर्मा